सञ्चितकर्मणां क्षये, अननुष्ठिति प्रयुक्तप्रत्यवायस्याप्यप्रसक्तौ, वर्तमानशरीरापगमे, कारणाभावात् शरीरान्तरानुत्पत्तौ, तन्मूलबन्धविच्छेदलक्षणो मोक्षः सेत्स्यति ।

ननु ! उक्तमोक्षात् संसार एव श्रेयान्, यत्र लेशेनापि सुखमनुभूयते । नैष दोषः । स हि मोक्षशास्त्राधिकारी, यस्तु उत्तरोत्तरशतगुणितानन्दानपि विषसंपृक्तान्नवत् दुःखानुषङ्गेन क्षयिष्णुत्वसातिशयत्वाभ्यां चावीचिसमं मन्यते । शरीरेन्द्रियविहीनस्यात्मनो वैषयिकसुखाप्रसक्तौ, नित्यसुखसत्त्वे, संसारदशायामप्युपलम्भप्रसङ्गात् । मुक्तिदशायामप्यभिव्यञ्जकाभावात् । केवलात्मन एवाभिव्यञ्जकत्वे, अभिव्यक्तेरनित्यायाः शरीरादिरहिते मुक्ते अशक्यशङ्कत्वात् । आत्मन एवानन्दरूपत्वेऽपि तदभिव्यक्तेरसंभवात् । दुःखाभावस्यापि स्वतः पुरुषार्थत्वात् तन्मात्रार्थिन एव मोक्षशास्त्रेऽधिकारः । तस्मात् सिद्धं कर्मैव मोक्षसाधनमिति ।

इति गुरुमतसंक्षेपः ॥

B. No. 9678. मातृकायां केचन पाठभेदास्सन्ति । तेऽप्यनुपदं पार्थक्येन प्रकाशयिष्यन्ते (सं)

---

N. B :— The following remark is made by Dr. A. C. Burnell in his 'Classified Index to the Sanskrit manuscripts in the Palace at Tanjore' about this manuscript. (Page 84 Vol. II.)

"The atheistic Mīmāṃsā of Prabhākara (or Guru) has been almost completely lost, and is chiefly known by quotations in the Çāstradīpikā and similar works. It is, beyond doubt, the oldest form of this system, and as every notice of it is of great interest, I give the account from the two Mss. (2111 and 9678), though this tract is obviously a recent compilation, and both MSS. are very incorrect in parts."

# गुरुमतसंक्षेपे पाठभेदाः

B. 2111-/D. 6979 इत्यङ्कितायां मातृकायां अविद्यमानाः, B. 9678-/D. 7632 इत्यस्यां तालपत्रमातृकायां समुपलभ्यमानाः केचन पाठभेदा इह प्रदर्श्यन्ते। "गुरुमतसंक्षेप" इति नाम उभयोस्तुल्यम्। मुद्रितग्रंथस्थानि पुटानि पंक्तीश्च अवलंब्य अत्र पाठभेदाः प्रदर्श्यन्ते।

| पुटम् | पंक्तिः | B 2111 | B 9678 |
|---|---|---|---|
| १ | ४ | तथा अधर्मोऽपि... | प्रत्यवायफलकं यद्विषयाननुष्ठानमधिकारिणः तथा अधर्मोऽपि... |
| ,, | ९ | स्वापेक्षितस्य ममेदं कार्यमिति बोद्धृलक्षण-नियोज्यस्य समर्पकतया | स्वापेक्षित ममेदं कार्यमिति बोद्धृलक्षण-नियोज्यसमर्पकतया |
| ,, | १० | स्वमूलकत्वेन प्रमाणीकुर्वन् | स्वमूलत्वेन प्रमाणीकुर्वन् |
| ,, | ११ | सामर्थ्यमप्यन्ते सहायीकुर्वन् | सामर्थ्य मत्यन्तसहायीकुर्वन् |
| ,, | १६ | धर्माधर्मविषये प्रमाणमेव | धर्माधर्मविषये वेदार्थरूपे प्रमाणमेव |
| ,, | १९ | तुरीये त्वौपादानिकः ... निर्णीतः | तुरीये त्वौपादानिकः तद्व्युत्पादनपूर्वकं क्रत्वर्थपुरुषार्थभागश्च निर्णीत इदमनेन प्रयुज्यते नानेनेति च |
| ,, | २० | श्रुत्यर्थादिप्रमाणकः | श्रुत्यर्थपाठादिप्रमाणकः |
| २ | २ | अन्त्यार्षेयवीन्द्रियदेवताना मनधिकारश्च | पंग्वंधबधिरात्यार्षेयदेवादीना मनधिकारश्च |
| ,, | ६ | ...ऊहो नवमे निरूपितः | ... ऊहो मन्त्रसामसंस्काराणां नवमे निरूपितः |
| ,, | ९ | धर्मो निरूपितः | धर्मो वेदार्थो निर्धारितः |
| ,, | १० | वेदाध्ययनं ... | तदनुकूलतया तत्रतत्र वेदाध्ययनम् |
| ,, | ११ | ग्राहकग्रहणं ऐदमर्थ्यत्रयं | ग्रहकग्रहणं, ग्रहकैदमर्थ्यं, करणैदमर्थ्यं, द्वारैदमर्थ्य मित्यैदमर्थ्यत्रयम् ... |
| ,, | १४ | कर्तृत्वादिनौपादानिकः | कर्तृत्वादिनान्वय औपादानिकः |
| ,, | २० | पदार्थान्तरमित्यादिप्रक्रिया गुरुनीताः ... | पदार्थान्तरम्, देवताया विग्रहादिपञ्चका-भावः, चतुर्थ्यन्तेन कर्माङ्गभावेन विनियुज्यमाना देवता, जगदनीश्वरत्वं, सर्गप्रलयाभावः, त्रिपुटीप्रकाशवादः, शरीरेन्द्रियादीनामनात्मत्वं, कर्मैव वेद- |

| पुटम् | पंक्तिः | B 2111 | B 9678 |
|---|---|---|---|
| | | | तात्पर्यविषयः, तात्पर्यविषये च शब्दः प्रमाण मित्यादिप्रक्रियाः प्रभाकृदुन्नीताः ... |
| २ | २३ | काम्यनिषिद्धकर्मानुष्ठानं बंधकम् । नित्य-नैमित्तिककर्माण्यनुतिष्ठन् वर्जयंश्च काम्यनिषिद्धकर्माणि पुरुषो मुच्यते | काम्यनिषिद्धकर्माण्यनुतिष्ठन् बध्यते। नित्य-नैमित्तिकान्यनुतिष्ठन् वर्जयंश्च काम्य निषिद्धानि पुरुषो मुच्यते । |
| ३ | २ | श्राद्धकृत्सत्यवादी च गृहस्थोऽपि विमुच्यते | न्यायागतधनस्तत्त्वज्ञाननिष्ठोऽतिथिप्रियः। श्राद्धकृत्सत्यवादी च गृहस्थोऽपि [ विमुच्यते ॥ |
| ३ | ३–११ | पंक्तयः | नोपलभ्यन्तेऽत्र |
| ,, | १२ | ....व्यापाररूपं किंचित् शरीरिमात्र-नियोज्यकम्, किञ्चित् चातुर्वर्ण्य ... | ...व्यापाररूपम्। उपासनमपि मानसं कर्मैव। किञ्चिच्छरीरिमात्रनियोज्यकं किञ्चिच्चातुर्वर्ण्य ... |
| ,, | १३ | ...मननुष्ठितवर्णाश्रमधर्माणां | ...मननुष्ठितस्वस्वधर्माणां |
| ,, | ,, | प्रतिषिद्धानामवगीत एव प्रत्यवायः | प्रतिषिद्धानाञ्चाविगीतप्रत्यवायः |
| ,, | १५ | वर्णाश्रमेष्वपि तदभिमानहीनाः | वर्णाश्रमेष्वपि तादृशाः |
| ,, | १६ | पातयन्त्यननुतिष्ठत इति | पातयन्त्यननुतिष्ठतः कर्माणीति |
| ,, | १८ | कारविरहस्याश्रद्धेयत्वात् | .... कारराहित्यस्याप्रामाणिकत्वात् |
| ,, | १९ | कर्मानुतिष्ठन् | कर्माण्यनुतिष्ठन् |
| ,, | २५ | ...कर्मणां क्षये | ...कर्मणां नाशे |
| ,, | ,, | अननुष्ठिति | तदननुष्ठान |
| ४ | ५ | ... विहीनस्यात्मनो | विहीनस्य मौक्तिकदशायामात्मनो ... |
| ,, | ९ | ....ऽधिकारः । तस्मात्... | ...ऽधिकारः। सच्चिदानन्दरूपं ब्रह्म निष्प्रपञ्चं निर्गुणं निष्क्रियम्। जीवश्च ...स्याविद्यकं कर्तृत्वादि । प्रपञ्च-मिथ्यात्वमविद्यामूलकारणं सर्वस्य ज्ञानान्मुक्तिरित्यादि निष्प्रमाणमेव । तस्मात्... |

इति षड्दर्शनी सिद्धान्त संग्रहे प्राभाकर सिद्धान्त संग्रहस्संपूर्णः ॥

॥ श्रीः ॥

# ॥ *विधिविचारः ॥

(सम्पादकः—ना. श्री. देवनाथाचार्यः)

सू – अभिघारणे विप्रकर्षादनुयाजवत्पात्रभेदस्स्यात् ॥ ४-१-१४ ॥

वाजपेय्या आग्नेयैन्द्राग्नादयः क्रतुपशवः प्राजापत्याश्च प्रातस्सवने तन्त्रेणोपक्रम्यन्ते। प्रकृतौ च 'प्रयाजशेषेण हवींष्यभिघारयति' इति श्रुतम्। तदिह चोदकतः प्राप्तं संदिह्यते — किं प्रातस्सवनानुष्ठितानां प्रयाजानां शेषः प्राजापत्यवपाभिघारणाय धारयितव्यः? उत न? इति। तदर्थं च किं हविस्संस्कारार्थमभिघारणम्? उत प्रयाजशेषप्रतिपत्त्यर्थम्? इति।

ननु प्राजापत्यानां क्रतुपशूनां च तन्त्रेणोपक्रमेण एकदालम्भनीयत्वा द्विचारानुपपत्तिरिति चेन्न; तन्त्रेणानुष्ठितानामप्युभयेषां पर्यग्निकरणान्ते च व्यापारे कृते प्राजापत्यानां, 'ब्रह्मसाम्न्यालभते' इत्युत्कर्षश्रवणेन माध्यंदिनकालानुष्ठेयप्राजापत्यवपाभिघारणाय प्रातस्सवनानुष्ठितप्रयाजशेषस्य हविस्संस्कारार्थत्वपक्षे धारणीयत्वेन विचारसम्भवात्।

नन्वथाप्यफलोऽयं विचारः। हविस्संस्कारकत्वेऽपि पुरोडाशकपालवत् परकीयद्रव्योपजीवनाच्च प्रयाजशेषप्रयोजकता अभिघारणस्य संभवतीति चेन्न; परप्रयुक्तद्रव्योपजीवनात् द्रव्यप्रयोजकत्वाभावेऽपि तत्पालनप्रयोजकत्वसम्भवात्सफलोऽयं विचारः। ननु प्रतिपत्तित्वेऽपि धारणप्रयोजकत्वं युक्तमेव। परिधानीये कर्मणि विहितप्रतिपत्ते र्यावज्जीवपात्रधारणप्रयोजकत्वदर्शनादिति चेन्न; परिधानीये कर्मणि विहितप्रतिपत्तेः यावज्जीवधारणं विना अनुपपत्तेस्तत्प्रयोजकत्वेऽपि प्रयाजशेषप्रतिपत्तेः सन्निहितसर्वहविरभिघारणेनापि सिद्ध्या धारणं विना अनुपपत्त्यभावात्, न धारणप्रयोजकत्वमिति वैषम्यात्।

तत्र प्रयाजशेषाभिघारणस्य तृतीयाद्वितीयाभ्या मुपयुक्तसंस्कारापेक्षयोपयोक्ष्यमाणसंस्कारस्याभ्यर्हितत्वाच्च हविस्संस्कारकत्वमेव, न तु प्रयाजशेषप्रतिपत्त्यर्थत्वम्। लक्षणाप्रसङ्गात्। तदुक्तम् —

* B. 2110/D. 7006. Thanjavur Saraswathi Mahal Manuscript.

'तत्रोपयोक्ष्यमाणानां द्वितीयायोगिनां तथा ।
हविषामेव संस्कारो न शेषस्य विपर्ययात्' ॥

इति । एवं प्राप्तेऽभिधीयते —

शेषस्य प्रतिपत्तिरपेक्षिता । हविस्संस्कारस्त्वनपेक्षितः । न चापेक्षितार्थकत्वे संभवत्यनपेक्षितार्थकत्वं युक्तम् । किञ्चाभिघारणस्य प्रतिपत्तित्वेऽत्यक्त जुहूरिक्तीकरणरूपदृष्टार्थत्वम् । हविस्संस्कारकत्वे त्वदृष्टार्थत्वम् । न च दृष्टार्थत्वे संभवत्यदृष्टार्थत्वं युक्तम् । न चैवं द्वितीया-तृतीययो र्लाक्षणिकत्वापत्तिः ; मुख्यप्रातिपदिकानुसारेण दृष्टार्थत्वानुसारेण च जघन्यप्रत्ययलक्षणाया युक्तत्वात् ।

अत एव नवमे[1] 'अदितिः पाशान्प्रमुमोक्तु' इत्यस्य किं बहुपाशकेषु विकृतिविशेषेषूत्कर्षः ? उत प्रकृतावेव निवेशः ? इति विशये, प्रकृतौ पाशबहुत्वस्य बाधितत्वादुत्कर्ष इति प्राप्ते, प्रकृत्यर्थस्य पाशस्य विभक्त्यर्थस्य कर्मणश्च प्रकृतौ संभवात्, न गुणभूतबहुवचनानुसारेणोत्कर्ष इति सिद्धान्तितम् ।

एवं 'सक्तूञ्जुहोति' इत्यत्र सक्तूनामनुपयुक्तत्वादनुपयोक्ष्यमाणत्वात्, संस्कारानर्हत्वात् प्रकृत्यर्थानुसारेण प्रत्ययस्य साधनत्वे लक्षणा स्वीकृता 'सक्तुभिर्जुहुया'दिति ।

तथा च 'प्रयाजशेषं हविष्षु क्षारये' दिति वाक्यार्थः पर्यवसितो भवति । तदुक्तम् -

'सत्यमेवं तथापीह शेषस्य प्रतिपादनम् ।
न्याय्यं दृष्टार्थतालाभात् अन्यथाऽदृष्टकल्पनात्' ॥ इति ।

अत्रेदं विचार्यते —

क्षारणस्य प्रयाजशेषप्रतिपत्तित्वे तृतीयाद्वितीययोर्लक्षणाप्रसङ्गात् हविस्संस्कारकत्वमेव युक्तम् ।

नच हविस्संस्कारकत्वे अदृष्टकल्पनापत्तेः, प्रतिपत्तित्वे तु जुहूरिक्तीकरणरूपदृष्टफलकत्वसंभवात्, तदनुसारेण लक्षणाद्वयाङ्गीकरणमपि युक्तम् । नहि दृष्टार्थत्वे संभवत्यदृष्टार्थत्वं न्याय्यम् ।

अत एव प्रमाणलक्षणे, 'तदर्थशास्त्रात्' मन्त्राः किमदृष्टार्थाः ? उत दृष्टार्थाः ? इति संशये — अर्थप्रकाशनरूपदृष्टप्रयोजनस्य उपायान्तरेणापि संभवात्, मन्त्राम्नानस्यानर्थक्यात् नियमादृष्टकल्पनायाश्च आदावेव मन्त्रैरेवादृष्टकल्पनाया ज्यायस्त्वात् अदृष्टार्था मन्त्रा इति

1 पू. मी. द. ९-३-५

पूर्वपक्षे; अर्थप्रकाशनरूपदृष्टार्थत्वे संभवति नादृष्टकल्पना युक्ता। तथा सत्यदृष्टस्वरूपं, तस्य मन्त्रसाध्यत्वम्, समभिहितस्य कल्पनीयमिति गौरवम्। अर्थावगमस्य मन्त्रसाध्यत्वस्य क्लृप्तत्वात् समभिहितत्वमात्रकल्पनमिति लाघवम्। नियमस्य तु दृष्टाभावात् तन्मात्रमदृष्टं कल्प्यतां, गौरवस्य फलमुखत्वेनादोषत्वादिति सिद्धान्तितम्।

एवं तत्रैव प्रथमे पादे, 'स्वाध्यायोऽध्येतव्यः' इत्यत्र, अध्ययनमदृष्टार्थम्? उत दृष्टार्थम्? इति संशये — अर्थज्ञानस्य पुस्तकवीक्षणाद्युपायान्तरेणापि संभवात् अध्ययनस्यानर्थक्यापत्तेः, नियमादृष्टकल्पनायाश्च आदावेवाध्ययनस्य तत्कल्पनाया ज्यायस्त्वात् इति प्राप्ते; अर्थज्ञानरूपदृष्टार्थत्वे संभवति, अदृष्टकल्पनाया अन्याय्यत्वात् अर्थज्ञानमेवाध्ययनस्य प्रयोजनम्। न चोपायान्तरेणार्थज्ञानसंभवाद्वैयर्थ्यम्; नियमार्थत्वेन सार्थक्यात्। क्रतुविधयो हि विद्यां विना अनुपपद्यमानाः यावद्विद्यामाक्षिपन्ति, ततः पूर्वमेव स्वाध्यायविधिना प्राप्तमर्थज्ञानमासाद्य चरितार्था भवन्ति इत्यर्थान्नियमविधिरापद्यते इति [1]।

एवं चतुर्थे, 'कृष्णविषाणया कण्डूयते' इति विधाय श्रूयते, 'चात्वाले कृष्णविषाणां प्रास्यति' इति। तत्र प्रासनमर्थकर्म? उत प्रतिपत्तिः? इति संशये — कृतार्थस्य संस्कारेण प्रयोजनाभावात् अर्थकर्म इति प्राप्ते — उच्यते। कृतार्थस्याप्याकीर्णकरत्वेन अपेक्षितप्रतिपत्तिरूपदृष्टार्थे संभवति अर्थकर्मत्वस्यान्याय्यत्वात् इति सिद्धान्तितम् इति वाच्यम्;

निषादस्थपत्यधिकरणन्यायेन शब्दशक्त्यनुसारेणादृष्टकल्पनादेः फलमुखत्वेनादोषत्वात्। इत्थं हि तदधिकरणे विचारितम् —

'एतया निषादस्थपतिं याजये' दित्यत्र, किं निषादानां स्थपतेस्त्रैवर्णिकस्यैवाधिकारः? उत जातिविशेषस्य? इति संशयः। तत्र निषादानां स्थपतिरिति षष्ठीतत्पुरुषेण त्रैवर्णिकस्यैवाधिकारः इति प्राप्ते; षष्ठीतत्पुरुषे पूर्वपदस्य सम्बन्धलक्षकत्वापत्त्या श्रौतकर्मधारयानुसारेण जातिविशेषस्यैव ग्रहणम्। न चादृष्टविद्याकल्पनादोषः, तस्य फलमुखत्वेनादोषत्वादिति [2]।

एवं 'वर्षासु रथकार आदधीत' इत्यत्र रथकारशब्देन रथकरणसमर्थस्य त्रैवर्णिकस्यैव ग्रहणम्। न तु जातिविशेषस्य। अपूर्वविद्यापरिकल्पनापत्तेः इति प्राप्ते; योगापेक्षया शीघ्रप्रवृत्तत्वेन प्रबलया रूढ्या जातिविशेषस्यैव ग्रहणम्। अपूर्वविद्याकल्पनं तु फलमुखत्वान्न दोषाय इति वर्णितम्।

---

1 सिद्धान्तितम् — इति पूरणीयम्। 2 अत्रापि।

किञ्चैवं सति स्तुतशस्त्राधिकरणविरोधस्स्यात्। तथाहि—स्तुतशस्त्राणि किं दृष्टार्थानि? उत अदृष्टार्थानि? इति संशये — मन्त्राधिकरणन्यायेन गुणिप्रकाशनरूपदृष्टार्थत्वे संभवति केवलमदृष्टार्थत्वमन्याय्यमिति प्राप्ते; 'यज्ञायज्ञीयेन स्तुवीत' 'प्रउगं शंसति' इत्यादौ श्रुतस्य स्तुतित्वस्यार्थप्रकाशनार्थत्वे बाधापत्तिः। लोके 'चक्रकेशान्तो देवदत्तः' इत्यत्र केवलगुणमात्रपरत्व एव स्तुतिबुद्धेरुत्पादात्। गुणिपरत्वे च, 'योऽयं चक्रकेशान्तो देवदत्तः तमानय' इत्यादौ स्तुतिबुद्धेरदर्शनात्। तथा च स्तौतिशंसत्योर्लक्षणापत्तिः। अतः शब्दशक्त्यनुसारेणादृष्टकल्पनमेव न्याय्यमिति सिद्धान्तितम्। तत्रापि एतदधिकरणन्यायेन दृष्टार्थत्वलाभेन प्रयाजशेषेणेति तृतीया विभक्तेर्लक्षणास्वीकारवत् स्तौतिशंसत्योरपि गुणिप्रकाशकत्वलक्षणां स्वीकृत्य मन्त्राणामिवानुष्ठेयार्थस्मारकत्वेन दृष्टार्थत्वोपपत्तेरदृष्टार्थसिद्धान्तो व्याकुप्येत्।

ननु न दृष्टार्थत्वानुसारेण तृतीयाविभक्तेर्लक्षणाङ्गीक्रियते। किन्तु प्रयाजशेषस्य प्रतिपत्त्यपेक्षानुसारेण, अपेक्षितार्थत्वलाभात्। हविस्संस्कारकत्वेऽनपेक्षितविधानापत्तेः। अतोऽपेक्षितविधानानुरोधेन लक्षणास्वीकारः। अत एव तृतीये, [1]अप्रयोजकत्वादेकस्मात्क्रियेरञ्छेषस्य गुणभूतत्वात — इति, स्विष्टकृदादीनि किमेकस्माद्धविषः कार्याणि? उत सर्वेभ्यः? इति संशये — शेषात्स्विष्टकृत इति शास्त्रस्य एकस्मादेव कृतार्थत्वात् एकस्मादेव कार्याणीति प्राप्ते — उच्यते, यदि शेषगुणकानि प्रधानकर्माण्येतानि, तदा स्यादेवम्। तथात्वे हि अनपेक्षितविधानं स्यात्। किन्तु शेषस्य प्रतिपत्तिनियमोऽयम्। आकीर्णकरस्य प्रतिपत्त्यपेक्षत्वात्, अपेक्षानुसारेण च पञ्चम्या प्रधानलक्षकत्वस्वीकारादिति[2]।

एवं '[3]तेषामर्थेन संबन्धः' दर्शपूर्णमासयोः औषधाज्यसान्नाय्यधर्माः किं सर्वत्र भवन्ति? उत यथासंयोगं व्यवस्था? इति विशये — अवघातादीनां व्रीह्यादिस्वरूपार्थत्वे अनर्थक्यात् अपूर्वसाधनत्वलक्षणावश्यकत्वेन तस्य सर्वसाधारण्यात् सर्वत्र स्युः इति प्राप्ते; आज्यसान्नाय्यादिषु अवघातविधानेऽनपेक्षितविधानं स्यात्, व्रीह्यादिष्ववघातविधाने तु अपेक्षितविधानमिति सिद्धान्तितम्।

एवं षष्ठे '[4]सह शाखया प्रस्तरं प्रहरती'त्यत्र, किं प्रस्तरप्रहरणाङ्गत्वेन शाखा विधीयते? उत शाखाप्रतिपत्ति प्रहरणं प्रस्तरप्रहरणकाले विधीयते? इति संशये—यःप्रस्तरं प्रहरति तत्सह शाखया, नान्यथा इति शाखासंसर्गः प्रह्रियमाणस्य प्रस्तरस्याङ्गं स्यात्। अन्यथाहि

1 पू. मी. द. 3-4-19 2 सिद्धान्तितमिति शेषः 3 पू. मी. द. 3-1-4.
4 पू. मी. द. 6-4-14

'प्रस्तरेण सह शाखां प्रहरति' इति वचनं स्यात् इति प्राप्ते; प्रस्तरं प्रहरणेन प्रतिपादयेत्सह शाखया इति हि वाक्यार्थः। यदि च शाखापि प्रतिपाद्यते, तदा शाखया सह प्रस्तरः प्रतिपादितो भवेत्, तेन सहशब्दस्वारस्यात् शाखापि प्रतिपाद्यते। किञ्च शाखायास्तत्रतत्रोपयुक्तत्वात्प्रतिपत्त्यपेक्षा। तथा चापेक्षितविधानं भवति। अङ्गत्वविधानेऽनपेक्षितविधानं स्यात् इत्युक्तमिति चेन्न;

तथासति, [1] **निष्कासस्यावभृथे तदेकदेशत्वात्पशुवत्प्रदानविप्रकर्षस्स्यात्'** इत्यैकादशिकाधिकरणविरोधापत्तिः। तथाहि — वरुणप्रघासेषु मारुत्यामिक्षा वारुण्यामिक्षा इति श्रुतम्। तत्र पुनः श्रूयते — 'वारुण्या निष्कासेन तुषैश्चावभृथं यन्ति' इति। तत्र संशयः — किं वारुण्यामिक्षायाः निष्कासस्येयं प्रतिपत्तिः? अथ आमिक्षानिष्कासद्रव्यकं अवभृथधर्मकं कर्मान्तरमत्र विधीयते? इति।

तत्रामिक्षाशेषस्य प्रयाजशेषाभिघारणवत् प्रतिपत्त्यर्थमिदं, न कर्मान्तरं अनपेक्षितार्थकत्वात् इति प्राप्ते; प्रतिपत्तित्वे अवभृथशब्दविरोधात्। अवभृथे हि द्रव्यं गुणतः कर्म प्रधानतः प्रतीयते। इह तु विपर्ययात्तद्भावानुपपत्तिः। अतः प्रसिद्धावभृथसदृशं कर्मान्तरं विधीयत इति स्थापितम्। अत्रापि आमिक्षानिष्कासस्य प्रयाजशेषन्यायेन प्रतिपत्त्यपेक्षानुसारेण तृतीयायाः प्राधान्यलक्षकत्वापत्त्या, आमिक्षानिष्कासद्रव्यककर्मान्तरविधिरिति सिद्धान्तो न सिद्ध्येत्।

ननु अवभृथनाम्ना, 'यथा प्रसिद्धेनावभृथेन कृतं तथाऽनेनापि कर्तव्य' मित्यवगम्यते। तत्र च द्रव्यं गुणः, यागः प्रधानम्। इह तु द्रव्यप्रतिपत्तित्वे, यागस्य द्रव्यं प्रधानं, यागो गुण इति वैपरीत्यात् प्रसिद्धावभृथवदयं कृतो न स्यादित्यवभृथशब्दविरोधादिति चेन्न; अग्नीषोमीयपशुपुरोडाशे प्रसिद्धाग्नीषोमीयाच्चोदकेन धर्मातिदेशानापत्तेः। चोदकेन हि 'यथा प्रसिद्धेनाग्नीषोमीयेन कृतं, तथाऽनेन कर्तव्यमित्यतिदिश्यते। प्रसिद्धे च देवतागुणो यागः प्रधानम्। पशुपुरोडाशे तु संस्कार्यत्वाद्देवता प्रधानं, यागो गुण इति वैपरीत्यात् प्रसिद्धाग्नीषोमीयवदयं कृतो न स्यादिति चोदकविरोधात्। यदि च तत्र देवतायाः प्राधान्येऽप्यार्थं गुणत्वमस्तीति न चोदकविरोधः, तदाऽत्रापि द्रव्यप्राधान्येऽप्यार्थं गुणत्वमप्यस्तीति नावभृथशब्दविरोध इति तुल्यम्। तस्मात्संनिपत्योपकारलाभात्प्रतिपत्तिरेवेदं कर्मेति।

नन्वेवमपि प्रतिपत्तित्वे, निष्कासांस्तुषांश्चोद्दिश्य संस्कारतया यागे विधीयमाने ग्रहैकत्वाधिकरणन्यायेन प्रत्युद्देश्यं वाक्यसमाप्तेः वाक्यभेदस्स्यात्। अतो निष्कासतुषद्रव्यकं अतिदेश-

1 पू. मी. द. 11-2-14

प्राप्तवरुणदेवताकं विशिष्टं कर्मान्तरमेव विधीयत इत्युच्यते। यथा 'अध्वर्युयजमानौ वाचं यच्छतः' 'यदुपभृति प्रयाजानुयाजेभ्यस्त्व' इत्यादौ, द्वन्द्वोपात्तोद्देशस्थले द्वन्द्वावगत साहित्य-विशिष्टानां, अवैयग्र्यसम्पादकवाग्यमादिकर्मत्वान्वयाद्देवतात्ववत् व्यासज्यवृत्तिकर्मत्वावगतेः न तत्रा-नेकोद्देश्यता, न वा तन्निमित्तो वाक्यभेदः। न चैवं सति तत्र समासोपात्तसाहित्यस्य विवक्षापत्ते-रन्यतरपदार्थबोधे अन्यतरस्य वाग्यमानुपपत्तिः; साहित्यविशिष्टयोरध्वर्युयजमानयो रुद्देश्यत्वेऽपि स्वरूपे आनर्थक्यादपूर्वसाधनलक्षणायां प्रत्येकवृत्त्यपूर्वसाधनत्वस्यैव लक्षणीयत्वेन तदनापत्तिः। यदि ह्यध्वर्युयजमानयोस्संहितयोरेककार्य जनकत्वं भवेत्, ततस्तथैव लक्षणायां स्याद्भवदुक्तानुपपत्तिः। नत्वेतदस्ति। अतस्समस्तेन प्रातिपदिकेन प्रत्येकवृत्त्यपूर्वसाधनत्वस्यैव लक्षणात् अविवक्षाफललाभे-ऽपि विवक्षाङ्गीकरणमवाक्यभेदार्थं न विरुध्यते। तथा 'वारुण्या निष्कासेन तुषैश्चावभृथं यन्ति' इत्यत्रापि इतरेतर योगार्थकचकारावगत साहित्यावच्छिन्नयोस्तुषनिष्कासयोः व्यासज्यवृत्त्येककर्मत्वा-वगतेर्नानेकोद्देश्यनिमित्तो वाक्यभेदः। न चैवं 'ग्रहं संमार्ष्टि' इत्यत्रापि एकत्व ग्रहत्वाद्यवच्छिन्न-वृत्तिव्यासक्तमेककर्मत्वमादायानेकोद्देश्य निमित्तवाक्यभेदस्य परिहर्तुं शक्यत्वेन एकत्वस्यापि विवक्षा-पत्त्या ग्रहैकत्वाधिकरणविरोधापत्तिरिति वाच्यम्; यत्र हि धर्मिणोस्साहित्यविशिष्टयोस्तत्रान्वयो व्युत्पत्तिसिद्धः, यथा 'अग्नीषोमीय'मित्यत्र द्वन्द्वावगत साहित्य विशिष्टयोरग्नीषोमयोर्देवतात्वं, तत्र व्यासज्यवृत्तिधर्मकल्पना। प्रकृते तु, एकत्व ग्रहत्वयोः तदवच्छिन्नव्यक्त्योर्वा द्वन्द्वादिना साहित्यानवगमात् न व्यासज्यवृत्त्येककर्मत्वकल्पनेति वैषम्यात्। तत्प्रपञ्चस्तु कौस्तुभे स्पष्टः।

केचित् प्रसिद्धावभृथधर्मकं तुषद्रव्यकञ्च कर्मान्तरं निष्काससंस्कारार्थत्वेन विधीयते, न तु तुषस्यापि संस्कार्यत्वम्; येन उद्देश्यानेकत्वनिमित्त वाक्यभेदः स्यात्। न चोभयोरप्युपयो-गित्वाविशेषेण विनिगमनाविरहः। तुषपदस्य जातिपदवद्विशेषवाचित्वेऽपि उत्तरार्धादिपदवत्ससंबन्धिक-वचनत्वाभावेन लौकिकतुषपरत्वेनोपपत्तौ, विहितप्रतिपत्तिक पुरोडाशीयतुषग्रहणे प्रमाणाभावात्। अत एव बोधायनीयकल्पे लौकिकतुषग्रहणमेवोपदिष्टम्। निष्कासपदस्य सम्बन्धिवचनत्वात्, वारुण्या-इत्यनेन विशेषणाच्च अर्थकर्मत्ववादिमतेऽपि च परप्रयुक्तद्रव्योपजीवकत्वस्योक्तत्वेन लौकिक-निष्कासग्रहणानुपपत्तेः उपयुक्तनिष्कासस्यैव ग्रहणाद्युक्तं संस्कार्यत्वम्। निष्कासस्यापि चाङ्गांशं प्रति गुणत्वा च्चशब्दोपात्तगुणसमुच्चयोपपत्तिः। न च तस्यातिदेशिकप्रतिपत्त्यन्तरनिराकांक्षस्य प्रयाजशेषन्याय-विषयत्वासम्भवः; त्वत्पक्षेऽपि निष्कासस्यातिदेशिक प्रतिपत्तिबाधस्यावश्यकत्वात्। प्रयाज-शेषस्यापि सर्वहोमसम्भवेनानपेक्षस्यैव विधानाच्च। अतो निष्काससंस्कारार्थत्वेन तुषद्रव्यकावभृथ-

धर्मैककर्मान्तरविधानेऽपि वाक्यभेदाभावादुभयद्रव्यककर्मान्तरविधिरिति सिद्धान्तविरोधो दुरुद्धर इति दिक्।

तदुत्तराधिकरणविरोधोऽपि स्यात्। तथाहि—'[1]उदयनीयश्च तद्वत्' ज्योतिष्टोमे प्रायणीयश्चरुः। तत्र श्रूयते—'प्रायणीयस्य निष्कास उदयनीय [2]मनुनिर्वपती'ति। तत्र संशयः—प्रायणीयनिष्कासस्योदयनीयनिर्वापसंयोगः प्रतिपत्तिः? उत प्रायणीयनिष्कासे निर्वाप उदयनीयस्य संस्कारः? इति।

तत्र प्रायणीयनिष्कासस्य कृतार्थस्येयं प्रतिपत्तिरुदयनीयनिर्वापसंयोगः इति प्राप्ते; निष्कासस्य हि सप्तम्या गुणभावोऽवगम्यते। द्वितीयया प्रधानत्वमितरस्य स्फुटं श्रुतम्। उदयनीय-हविश्च निरुप्यमाणं भाव्युपयोगित्वात्सुतरां संस्कारार्हम्। न च निष्कासस्य प्रयाजशेषवदुदयनीय-संयोगात्किंचिद्दृष्टमस्ति, येन विभक्तिव्यत्यय आश्रीयेत। तस्मात् श्रुत्यानुगुण्यात् उदयनीय-हविस्संस्कारार्थं प्रायणीयनिष्कासे निर्वाप इति सिद्धान्तितम्।

अत्र प्रायणीयनिष्कासस्य प्रतिपत्त्यपेक्षानुसारेण सप्तम्याः प्राधान्यलक्षकत्वसंभवात् सिद्धान्तानुपपत्तिः। तथा चापेक्षानुरोधेन लक्षणाकल्पनायां ऐकादशिकाधिकरणद्वयाविरोधः। अदृष्टकल्पनाभयेन तत्कल्पने पूर्वोदाहृताधिकरणत्रयविरोधो दुरुद्धर इति।

किञ्च द्वितीयायाः सप्तम्यर्थलक्षकत्वे हविषा मभिधारणं प्रत्युपादेयत्वापत्तेः स्वगत-बहुत्वस्य पश्वेकत्वन्यायेन विवक्षापत्तौ, बहुत्वस्य कपिञ्जलाधिकरणन्यायेन त्रिष्वेव पर्यवसानापत्त्या सन्निहितसर्वहविःषु क्षारणं न सिद्ध्येत्। इत्थं हि तदधिकरणमेकादशे वर्णितम्—

'[3]बहुवचने सर्वप्राप्तेर्विकल्पस्स्यात्' 'वसन्ताय कपिञ्जलानालभेत' इत्यादिषु बहुवचनेषु किं त्रयाणामेवालम्भः? उत त्रिप्रभृतीनां संख्यानाम्? इति संदेहे—

बहुवचनस्य सर्वतः प्रवृत्तेः सर्वासां संख्यानां शास्त्रार्थत्वं, शास्त्रीयाच्च प्रयासगौरवात् फलभूयस्त्वमित्यविवादम्। अतो यावदुत्साहं नानासंख्योपादानमिति प्राप्ते;

बहुत्वमात्रं हि शास्त्रार्थः, न तु 'षड्देया द्वादशदेया' इत्यादिवत् संख्याविशेषाणां

---

1 पू. मी. द. 11-2-15 2 ... मभिनिर्वपति-इति पठन्ति 3 पू. मी. द. 11-1-6

भेदेन शास्त्रमस्ति, यद्बलात् फलभूयस्त्वं कल्प्येत। योऽपि त्रीनालभते यश्च सहस्रं, तयोरुभयोरपि बहुत्वसंपादनमविशिष्टम्। यत्तु विशिष्टेने सहस्रादि तदशास्त्रीयम्। न चाशास्त्रीये गौरवं फलभूयस्त्वमलं कल्पयितुम्। एवञ्च त्रीननालभ्य चतुर्णामालम्भासम्भवात् अवश्यं त्रय आलब्धव्याः। तावतैव सिद्धे शास्त्रार्थे नाधिकालम्भं तावच्छास्त्रं कारयति। निवृत्तव्यापारे च विधौ, न हिंस्यादिति निषेधशास्त्रं प्रवर्तत इति अधिकानालम्भ इति।

अभिधारणं प्रत्याधारत्वेनान्वितानामपि हविषा माधारतानियमस्य प्रयोजनजिज्ञासायां; प्रत्यासत्त्या हविस्संस्कारकत्वस्य कल्पना। तस्मिंश्चाधारतानियमे तेषामुद्देश्यत्वात् तद्विशेषणस्य बहुत्वस्य ग्रहैकत्वाधिकरणन्यायेनाविवक्षोपपत्तिः। न चैवमुद्देश्यद्वयसमावेशे वाक्यभेदः, श्रौतोद्देश्यद्वयसमावेशस्यैव वाक्यभेदकत्वात्। प्रकृते तु प्रयाजशेषस्य श्रौतमुद्देश्यत्वं, हविषान्त्वार्थिकसंस्कारं प्रत्यार्थिकमेवोद्देश्यत्वमिति न वाक्यभेदः।

नचैवं हविस्संस्कारत्वे, वाजपेये प्राजापत्यवपाभिधारणार्थं धारणीय एव प्रयाजशेषः पात्रान्तर इति वाच्यम्; संस्कारो हि न श्रौतः, किन्तु नियमान्यथानुपपत्त्या कल्प्यः। नियमविधिश्च यत्र प्राग्विधेरनियमप्रसक्तिस्तत्र प्रवर्तते। प्रयाजानन्तरं कर्तव्याज्यभागद्रव्यासंसर्गार्थं च संनिहितेष्वेव यत्र क्वचन शेषस्य प्रतिपादनं प्रसक्तं, नासंनिहितेष्वित्यसंनिहितानां नियमविषयत्वाभावेन तदर्थं पात्रान्तरे न शेषधारणप्रसक्तिरिति चेन्न; श्रुताभिधारणं प्रत्युपादेयत्वेन विवक्षितत्वे आर्थिकाधारतानियमं प्रत्यपि त्रयाणामेवोद्देश्यतापत्तेः।

किञ्च 'यदर्थो नियमाश्रयः तदर्थ एव नियमः' इति सर्वत्र क्लृप्तेः आधारतानियमोऽप्यभिधारणनियमवत् तद्द्वारा प्रयाजेष्वेवोपयुज्येत। इतरथा पशुस्थजाघनीतुषोपवापादिवाक्येष्वपि करणतानियमस्य जाघनीप्रतिपत्त्यर्थत्व कपालसंस्कारकत्वापत्तेः एकत्वाविवक्षापत्तिः। इत्थं हि [1] तदधिकरणं द्वादशे निश्चितम् —

दर्शपूर्णमासयोः पत्नीसंयाजेष्वाज्येन सह विकल्प्यमाना जाघनी, चोदकेनाग्नीषोमीये पशौ प्राप्ता। तत्रापि श्रूयते 'जाघन्या पत्नीस्संयाजयन्ति' इति। ततोऽपि पशुगणे चोदकेन प्राप्नोति। तत्र बह्वीनां जाघनीनां विकल्पः? समुच्चयो वा इति संशयः।

---

1 पू. मी. द. 12-4-6

तत्र यद्यपि दर्शपूर्णमासयोः जाघनी गुणभूता पत्नीसंयाजनाम्, तथापि अग्नीषोमीये हृदयाद्यर्थलब्धपशुनिष्पन्नजाघन्याः प्रतिपत्त्यपेक्षायां प्रतिपत्तित्वेन पत्नीसंयाजविधानार्थं पुनर्वचनं दृष्टार्थत्वात्। ततः पशुगणे समुच्चयः। मैवम्; आज्येन सह विकल्प्यमानायाः चोदकप्राप्तायाः पुनर्वचनं नियमार्थम्। यथाप्राप्ति च नियमः। प्राप्तिश्च गुणभावेनैवेति तादृश्येव नियम्यते। अतः पशुगणे विकल्प इति।

अत्र आधारतानियमं प्रतीव करणतानियमं प्रति आर्थिकमुद्देश्यत्वं जाघन्यामस्तीति तद्गतैकत्वस्याप्यविवक्षापत्तौ, प्रतिप्रधानावृत्तिन्यायेन सर्वजाघनीनामपि प्रतिपत्त्यर्थं समुच्चयापत्तेः एतदधिकरणविरोधः स्यादिति। कथमिदमिति चेत्—

[1]अत्रोच्यते—

॥ श्रीरस्तु ॥

## सू—[2]फलश्रुतेस्तु कर्म स्यात्फलस्य कर्मयोगित्वात्॥

अग्निहोत्रं प्रकृत्य 'दध्नेन्द्रियकामस्य जुहुया' दिति श्रुतम्।

तत्र संशयः—किमग्निहोत्रात्कर्मान्तरं दधिविशिष्ट मिन्द्रियकामाय विधीयते? उत तत्रैव गुणमात्रं फलाय विधीयते? इति।

तदर्थमिदं विचार्यते—किं कर्मणः फलम्? उत गुणात्? इति।

यदि कर्मणः, ततः प्राप्तस्य कर्मणः फलसम्बन्धं गुणसम्बन्धञ्च एकं वाक्यं न शक्नोति विधातुमिति कर्मान्तरं स्यात्। गुणफलसम्बन्धे तु, तन्मात्रं वाक्येन विधीयते—दधिहोमसम्बन्ध-स्त्वाश्रयाश्रयिरूपः प्रकरणप्राप्तोऽनूद्यमानो न वाक्यं भिनत्तीति सिद्धमेकवाक्यत्व मकर्मान्तरत्वे-ऽपीति।

तत्र भावार्थाधिकरणन्यायेन धात्वर्थस्यैव फलसम्बन्धः, न नामार्थस्य। स तु धात्वर्थस्यैवाङ्गमिति, दधिविशिष्टहोमः फलाय विधीयते। विहितस्य च विधानायोगात्कर्मान्तरत्वम्। तदुक्तम्—

'धात्वर्थात्फल मित्युक्तं भावनासंनिकर्षतः।
विप्रकृष्टस्तु नामार्थ स्तदर्थो न फलान्वयी॥' इति।

किञ्च दध्नः फलार्थत्वे जुहोतेरानर्थक्यम्, होमेऽपि दधिविधाने वाक्यभेदः, प्राप्तस्य

---

1. एतावति सावशेष एव ग्रन्थो विच्छिद्यते। अन्यो विचारः प्रस्तूयते।
2 पू. मी. द. 2-2-11

होमस्य फलसंबन्धस्य गुणसंबन्धस्य च विधानानुपपत्तेः। तस्माद्गुणविशिष्टस्य होमस्यैवापूर्वस्य फले विधानमिति। तदुक्तम्—

'दध्नश्च फलसंबन्धे जुहोतिः स्यादनर्थकः।
यदि सोऽपि विधीयेत वाक्यभेदः प्रसज्यते॥' इति।

इति प्राप्ते ब्रूमः—

तत्र हि भावार्थाधिकरणन्यायः, यत्र धात्वर्थो नामार्थश्चोभयमपि विधीयते। अत्र तु प्राप्तत्वेन धात्वर्थस्याविधेयत्वात् गुणमात्रं विधीयते। विधेयस्य फलसंबन्धो नाविधेयस्य। तेन गुणस्यैव फलम्। ननु कर्मान्तरं विधेयं भविष्यति, प्रकृतहानाप्रकृतकल्पनविशिष्टविधिगौरवमत्वर्थलक्षणादोषप्रसङ्गात्। दधिहोमसंबन्धस्त्वाश्रयाश्रयिरूपः प्रकरणप्राप्तोऽनूद्यत इति न वाक्यभेद इति न कर्मान्तरम्। तदुक्तम्—

'धात्वर्थस्यान्यतः प्राप्तेर्गुणमात्रं विधीयते।
विधेयं यत्र तेनैव फलं, नान्येन युज्यते॥' इति।

तत्र कर्मान्तरमिति पूर्वपक्षस्तावदनुपपन्नः, भेदकप्रमाणाभावात्। तथाहि— किं गुणो भेदकत्वेनाभिमतः? उत प्रकरणान्तरम्?

**नाद्यः** उत्पत्तिशिष्टगुणान्तराभावेन वाजिनन्यायेन तस्याभेदकत्वात्। ननु तथाप्युत्पत्तिवाक्ये कर्मणः प्राप्तत्वा तदनुवादेन फलसम्बन्धस्य दधिसम्बन्धस्य च विधौ वाक्यभेदापत्तेः, तदापादकस्य गुणस्य भेदकत्वं भविष्यत्येव। न च दध्ना जुहोतीत्यनेनैव प्राप्तत्वात्तद्वाचकपदस्यानुवादकत्वेन केवलं फलसम्बन्धमात्रकरणात् न वाक्यभेद इति वाच्यम्; अग्निहोत्रे द्रव्यान्तराणामपि विहितत्वेनेन्द्रियकामप्रयोगे दध्नो नित्यप्राप्त्यभावेन पाक्षिकानुवादत्वासम्भवेन विधेयत्वापत्तेः वाक्यभेदानिवारणात्; इति चेन्न— उत्पन्नस्यापि कर्मणः फलोद्देशेन विधेयत्वात् तत्र गुणविशिष्टस्य विधानोपपत्तेर्वाक्यभेदाभावात्। अन्यथा राजा राजसूयेनेत्यत्र प्राप्तस्यापि राजसूयस्य राजकर्तृकत्वविशिष्टस्य फले विधानानुपपत्तेः।

तथाहि चतुर्थे '[1]प्रकरणशब्दसामान्याच्चोदनानामनङ्गत्वम्'

अनुमत्यादीनि विदेवनादीनि यागायागकर्माणि प्रकृत्य श्रुतम्—'राजा राजसूयेन स्वाराज्यकामो यजेत' इति।

---

1 पू. मी. द. 4-4-1

तत्र संशयः — किं सर्वाणि समप्रधानानि ? उत अयागाः क्रत्वर्थाः ? इति ।

तत्र तृतीयान्तेन राजसूयपदेन फलापेक्षिणां प्रकृतानां सर्वेषां फलसमर्पणेन सर्वेषां नामत्वेऽवधारिते, आख्यातेन भावनामात्रं विधीयते । यजिस्तु साधुत्वार्थं प्रयुज्यमानः छत्रिन्यायेन यागायागसमुदायानुवादः इति प्राप्ते; उच्यते —

अत्र भावार्थाधिकरणन्यायेन यजिना यागरूपाणामेव फलसंबन्धकरणात् तेषामेव प्राधान्यम् । इतरेषान्तु तदङ्गत्वम् । राजसूयपदन्त्वप्रसिद्धार्थकत्वात् प्रधानभूतधात्वर्थानुसारेण यागानामेव नामधेयमिति ।

एवमेकादशेऽपि—किमाग्नेयादीनि पृथक्पृथक् फलं साधयन्ति ? उत संहत्य ? इति । तत्र,

परस्परानपेक्षाणामुत्पन्नानां फलार्थिनाम् ।
चोद्यमानं फलं तेषामेकैकस्यावधार्यते ॥

तेषां ह्युद्दिश्यमानानां साहित्यं न विवक्षितम् ।
तस्मात्प्रत्येकमेव स्यात्-इति प्राप्ते; अभिधीयते ॥

आग्नेयादिकमुद्दिश्य फलं यद्युपदिश्यते ।
तत उद्दिश्यमानत्वात् तेषामेकैकशः फलम् ॥

कामिनन्तु यदोद्दिश्य कर्मणां चोदना तदा ।
तेषां विधीयमानानां सहभावो विवक्षितः ॥

इति अर्थप्राप्तानामप्याग्नेयादीनां साहित्यविशिष्टानां फले विनियोगदर्शनेन वाक्यभेदाभावः स्फुटः ।

एवं द्वितीयेऽपि — 'त्रिवृदग्निष्टुदग्निष्टोमस्तस्य वायव्यास्वेकविंशमग्निष्टोमसाम कृत्वा ब्रह्मवर्चसकामो ह्येतेन यजेत' इति ।

अथ प्रथमान्तत्रयस्य यजेतेत्यनेनानन्वयात्, कर्तव्यपदाध्याहारेणाभिन्नवाक्यत्वं तावदावश्यकम् । तत्र त्रिवृदग्निष्टोमवृत्तिवायव्यादिगुणविशिष्टस्य फलोद्देशेन विधाना द्वाक्यभेदाभावस्स्फुटः ।

तस्मान्न गुणो भेदकः ॥

**नापि द्वितीयः**; [2]'सन्निधौ त्वविभक्तत्वात्' इति न्यायेनासन्निध्यभावेन प्रकरणान्तरस्य भेदकस्याभावात् । अत एतेन फलरूपानुपादेयगुणयोगादनुपादेयगुणविशिष्टस्य कर्मणो मासाग्नि-

1 पू. मी. द. 11-1-1    2 पू. मी. द. 2-3-13.

होत्रवदुत्सर्गतः प्राप्तस्य विधेयत्वस्यापवादकाभावात् प्रत्यभिज्ञायाश्च प्रणयनादिमात्रविषयिण्याः भिन्नविषयत्वेन गोदोहनविशिष्टप्रणयनवृत्तिविधेयतापवादकत्वायोगवत्, दध्यादावपि च दधिमात्र-विशिष्टहोमवृत्तिविधेयताया दशद्रव्यविशिष्टहोमविषयकप्रत्यभिज्ञयापवादायोगस्य तुल्यत्वात्, अनु-पादेयगुणसहकृतानुपस्थितिरूपप्रकरणान्तरमेव भेदकमिति वार्तिकन्यायसुधयोरुक्तं प्रत्युक्तम्। राज-सूयादिस्थले विशेषमात्रप्रत्यभिज्ञया तन्मात्रवृत्त्युत्पत्तिविधिविषयतारूपविधेयताप्रतिबन्धकत्वस्येव प्रकृतेऽपि संभवात्। तस्माद्भेदकप्रमाणाभावेन कर्मान्तरत्वायोगात् तदेव कर्म गुणविशिष्टं फलोद्देशेन विधीयत इति, कर्मान्तरविधिरिति पूर्वपक्षोऽनुपपन्नः।

अत एव सिद्धान्तोऽप्यनुपपन्नः। दधिविशिष्टस्यैव होमस्य फले विधानोपपत्तेः। किञ्च धात्वर्थस्य फले विधानसंभवे, न विप्रकृष्टगुणस्य विधानोपपत्तिः। धात्वर्थस्य विधिसंभवे, धातोरत्यन्तपारार्थ्यविप्रकृष्टविधानयोरनुचितत्वात्। न चोत्पत्तिवाक्ये कर्मणः प्राप्तत्वात् तदनुवादेन गुणफलसंबन्धविधौ वाक्यभेदापत्तिः। अत एव [1] पौर्णमास्यधिकरणे, 'य एवं विद्वान्पौर्णमासीं यजत — य एवं विद्वानमावास्यां यजते' इति विद्वद्वाक्ययोर्विधायकत्वमेव। न च रूपालाभः, आग्नेयादिवाक्यैर्द्रव्यदेवताविधानसंभवादिति प्राप्ते —

प्राप्तकर्मानुवादेनाग्नेः अष्टाकपालद्रव्यस्य च विधाने वाक्यभेदापत्तेः, रूपाभावादनुवाद-कत्वमेवेति सिद्धान्तितमिति चेत् — न। दध्ना जुहोतीत्यनेन वाक्येन प्राप्तदध्यनुवादेन धात्वर्थस्यैव फले विधानोपपत्तेः। एवं सति धात्वर्थस्य फलोद्देशेन विधानात् धातोः पारार्थ्यं न भविष्यति। अन्यथा गुणस्य फले विधाने धातोरत्यन्तपारार्थ्यं स्यात्।

अत एव 'उद्भिदा यजेत पशुकामः' इत्यत्र, उद्भिच्छब्दः गुणविधिः कर्मनामधेयं वेति संशये, नामत्वे आनर्थक्यात् प्रकृतज्योतिष्टोमाश्रयेण उद्भिल्लक्षणगुणस्य पशुलक्षणफलोद्देशेन विधानमिति प्राप्ते - धातोरत्यन्तपारार्थ्यात् विप्रकृष्टविधानाच्च न फलगुणविधिः, किन्तु नामधेय-मेवेति। न चानर्थक्यम्, अथैष ज्योतिरित्यादिषु कर्मभेदकत्वेन, क्वचित्संकल्पोपयोगित्वेनानर्थ-क्याभावादिति सिद्धान्तितम्।

अत्र केचित् - गुण एव वाक्यभेदापादकः कर्मभेदकः। तथाहि — विधिस्तावच्चतुर्विधः-उत्पत्तिविधिः, विनियोगविधिः, प्रयोगविधिः, अधिकारविधिश्चेत्यविवादम्। तत्र धर्मिस्वरूप-ज्ञापको विधिरुत्पत्तिविधिः। इष्टसाधनत्वबोधको विधिर्विनियोगविधिः। कृतिसाध्यत्वबोधको विधिः प्रयोगविधिः। अधिकारबोधकोविधिरधिकारविधिः। अङ्गान्यपि च कानिचिद्द्रव्यदेवतादीनि उत्पत्त्य-न्वयीनि। यागस्वरूपस्य द्रव्यदेवताघटितत्वात् विशेषणज्ञानविधया तद्रूपपरिचय एवोपयोगात्

1 पू. मी. द. 2-2-3.

## ऐकारः

ऐक्ष्वाकवंशवर्धनं [1]ऐशानीमुख्यसुन्दरीसेव्यम् ।
ऐणेयचर्मपीठे, [2]ऐक्षे [3]कल्याणदानचतुरेक्षम् ॥ १ ॥

ऐक्षवमधुरिमभाजं, [4]ऐशाविर्भावसूचकं हृद्यम् ।
ऐकान्त्यकल्पकमहं, ऐदंपर्येण नौमि किमपि सदा ॥ २ ॥

[5]ऐष्टिकहविरुद्दिष्टं, [6]ऐतिकबाधाविधूननोत्कण्ठम् ।
ऐहिकफलप्रदाने, ऐदंपर्यं दधानमिह कलये ॥ ३ ॥

ऐश्वर्यदातृनेत्रां, [7]ऐरंमदभासदृक्षलावण्याम् ।
[8]ऐभयुगशोभिनिकटां, [9]ऐक्षुशरासोदयप्रदां वन्दे ॥ ४ ॥

ऐन्दवसुधाभिरामे!, [10]ऐनप्रभ [11]भूषणप्रकाशितावयवे! ।
ऐशस्वभावमधुरे! ऐक्यं भजतादिदं त्वया चेतः ॥ ५ ॥

ऐकान्त्यबन्धरम्यं, [12]ऐकस्वाम्यात्तरंजनं विष्णोः ।
[13]ऐरमदहारनेत्रं, [14]ऐतु मनो मे रमाह्वयं ज्योतिः ॥ ६ ॥

ऐषीकतूलनाशं, [15]ऐन्धनतेजोबलेन नष्टानाम् ।
ऐन्दवसुधेव भूयाः, [16]ऐकध्यद्वेषवह्नितप्तानाम् ॥ ७ ॥

ऐक्यं वक्षसि देशे, ऐकान्त्यं निखिलकारणत्वे च ।
ऐदंपर्यं श्रुतिषु, ऐकध्यं भजसि तत्त्वमार्गे त्वम् ॥ ८ ॥

---

1 पार्वती 2 अपश्यम् 3 कल्याणदानचतुरा ईक्षा यस्य तत् तथोक्तम् ।
4 परतत्त्वचिह्नभूतम् 5 इष्टिसंबन्धि 6 ईतिबाधा 7 विद्युत्प्रभा
8 कूश्माण्डयुगम् 9 मन्मथजननीम् 10 सूर्यप्रभासदृशप्रभावद्भूषणैः प्रकाशिता अवयवाः यस्यास्सा तस्याः संबुद्धिः 11 अत्र अक्षराधिक्यम् 12 ऐकस्वाम्येन आत्तं रञ्जनं यस्य तत्-तथोक्तम् 13 सुरामदापहारिनयनम् 14 आगच्छतु
15 सौरतेजोबलेन 16 एकप्रकारत्वम्

ऐश्वर्याणां सीमा, [1]ऐनान्वयजातविवृतबहुभूमा ।
ऐधितजनताधामा, ऐहिकभव्यं ददातु मे रामा ॥ ९ ॥

ऐन्दीवरद्युतिमुषि, ऐक्यं दधतीह सर्वभूतेषु ।
ऐकान्त्यसीमनि हरौ ऐजतया सा चिराय हृदि वसतु ॥ १० ॥

## ओकारः, औकारश्च

ओजिष्ठदिव्यगात्रं, ओषधिनाथेन तुलितलावण्यम् ।
ओमित्युपास्यमनिशं, [2]ओकसि हृदयेऽस्तु कोमलाम्बाह्वम् ॥ १ ॥

ओष्ठपुटजातशोभं, ओजस्विमहर्षिपूजितपदाब्जम् ।
[3]ओषितदुर्जनदर्पं, [4]ओणयतान्मे दुरध्वरुचिमारात् ॥ २ ॥

[5]ओक्षितमहीतलस्थाः, ओङ्कारोच्चारणोत्सुका यतयः ।
[6]ओतजगतीं विलासैः, [7]ओपासितुमीशते हितां भवतीम् ॥ ३ ॥

[8]ओषधिभूतचरित्रां, ओजोऽधिष्ठाननाथसंसृष्टाम् ।
[9]ओकसि नाके दीप्रां, [10]ओखाम्याद्याश्च मातरं जगताम् ॥ ४ ॥

[11]ओमो मध्यमवर्णे, [12]ओषितमह्नाय भावुकं विदधत् ।
ओजोबलाढ्यमनिशं ओतं वेदान्तभागशः सेवे ॥ ५ ॥

[13]औषसविलासभरितान्, औत्कम्येनाधिवासिताशान्तान् ।
औपम्येन सुदूरं, [14]औज्झन् कवयः सरोरुहस्तोमान् ॥ ६ ॥

औज्ज्वल्यभाञ्जि भूम्ना, औल्बण्यसमिद्धमधुररसयुञ्जि ।
औत्कण्ठ्यरुद्धरुञ्जि, औषधतां यान्तु लोचनमहांसि ॥ ७ ॥

---

*1* ऐनान्वयः-सूर्यवंशः *2* स्थाने *3* दग्ध *4* अपनयतु *5* प्रोक्षित *6* व्याप्त
*7* ध्यातुम् *8* व्याधिनिवर्तक-जाज्वल्यमान *9* श्रीवैकुण्ठे *10* ओखामि पर्याप्तां मन्ये-भूषयामि *11* ओङ्कारस्य *12* प्रकाशम् *13* उषःकालीनशोभापूर्णान्
*14* अत्यजन्

[1]औन्दन् त्वदीक्षणवशात्, औज्झन् संसारवागुरां दूरे ।
औक्षन्नश्रुभिरङ्गं, [2]औजसमधिकं भजन्ति ते भक्ताः ॥ ९ ॥

इति कोमलाम्बास्तवः समाप्तः ॥

— :x: —

## ॥ शार्ङ्गधरस्तुतिः ॥

किञ्चन कुम्भपुरीशं, कोमलवल्लीसमेधितानन्दम् ।
शरणागतेष्टदाने चिन्तामणिकल्पकल्पमवलम्बे ॥ १ ॥

भुजगपतितल्पशयनं, करधृत कोदण्ड दण्डविभ्राजम् ।
अभयप्रदानदीक्षितं, अर्यमकोटिप्रभं भजे देवम् ॥ २ ॥

तरुणारुणाब्जपद्मं, [3]तरणिसुताकल्पकेशपाशं नः ।
कलितप्रदानमुद्रामञ्जुलहस्तं विराजतां तेजः ॥ ३ ॥

अक्षिणि विशालमङ्घ्रौ सरसिजशोभं नतं महाघोणे ।
द्रढिमानं बाहुयुगे, कल्याणं मे ददातु मे तेजः ॥ ४ ॥

विप्रजनताभिगम्ये, सहृदयरम्ये विरागिभिः काम्ये ।
अवधूतसर्वसाम्ये, विलसतु [4]हृदये रमासमागम्ये ॥ ५ ॥

अकृतकवचःप्रधानं [5]ह्यकलिलकल्याणशेवधिनिदानम् ।
तेजःपुञ्जपिधानं, नमामि लक्ष्मीशमादरात्सेव्यम् ॥ ६ ॥

सरसिजनिलयामेचक चूचुकसंमर्दकार्ष्ण्यपरभागः ।
जयतु विलासिवरेण्यः, कस्तूर्या दृष्टशक्रसंकाशः ॥ ७ ॥

कमले मधुकरपङ्क्तिः, चन्द्रिर्बिम्बे च कालिमा यादृक् ।
तरुणतुलसी मुरारेः, वक्षसि बाभाति तादृशी रम्या ॥ ८ ॥

---

1 क्लिन्ना अभूवन्   2 ओजः — बलम्   3 यमुना   4 हृत्-अये-इति पदच्छेदः हृत्-हृदयम्
5 अकल्मष

मुग्धाः केचन मनुजाः, श्रीपतितोऽन्यं भजन्ति यं कश्चित् ।
वयमिह महागभीरं, शार्ङ्गधरं देव माश्रयामः स्वम् ॥ ९ ॥

वलयितसरोजमालं, [1]वरुणालयजाविलासमुल्लोलम् ।
करुणार्द्रनेत्रलीलं, कलये संमोदसागरोद्वेलम् ॥ १० ॥

शार्ङ्गधन्वस्तुतिः समाप्ता ।

—❀—

# ॥ सरस्वतीस्तुतिः ॥

( महाकवि शेषशायि विरचिता )

करकलितमञ्जुवीणां करुणाकल्लोलवेल्लितापाङ्गाम् ।
मधुरतममन्दहासां मङ्गलसन्तानवल्लिकां नौमि ॥ १ ॥

सरसिजसोदरनेत्रीं सरसिजनिलयाधवस्नुषां सरसाम् ।
सरसोक्तिशिक्षणधुरासंधुक्षणवीक्षणां भजे देवीम् ॥ २ ॥

निखिलजगतीविलासं नवनवसौभाग्यसंपदापूर्णम् ।
निरतिशयमहिमभाजं कलयति कल्याणि! तावकी वीक्षा ॥ ३ ॥

तरुणेन्दुमौलिभावं करुणोदितगीतगौरवाटोपम् ।
चतुराननत्वमथवा वितरसि वीक्षास्पदस्य महनीये! ॥ ४ ॥

मकरन्दलोलुपानां मध्येकुसुमं विगाहमानानाम् ।
निनदैर्मधुव्रतानां विघ्नविधूर्तिं करोति ते माला ॥ ५ ॥

सुमसममञ्जुलगुम्भितपदविन्यासं कवीशजिह्वायाम् ।
कलयसि रसार्द्रललितं कमपि विधातुर्मनोरमे! सततम् ॥ ६ ॥

चतुराननो भवत्याः कुचयुगलं गण्डगोयुगं दृष्ट्वा ।
नामान्वर्थं कुरुते को हि न वाञ्छेत्? विधातुमात्मेष्टम् ॥ ७ ॥

सरसिजकुड्मलसुभगे कुचकुम्भे न्यस्तलोचनो धाता ।
अकलितनिर्वृतिकर्मा प्रतिपदमद्धा करोति गोप्रलयम् ॥ ८ ॥

---

1 लक्ष्मीः

प्रमुषितवल्लभगह्वरवदनस्मृति र्वाचि सत्कवीशानाम् ।
अयि भो! निवस्तुमाशां निस्तुल मम्बे! दधासि युक्तमिदम् ॥ ९ ॥

करुणापूरतरङ्गित मरुणाधरशोणिमात्तसर्वस्वम् ।
तरुणारुणांशुराजितसरसिजनयनं ददातु मे भवुकम् ॥ १० ॥

कापि च कालिमरीतिः मधुकरपटलीकचाकचिप्रधने ।
अपहृतविजयपताकं श्रयति मनोज्ञं तवांब! कचपाशम् ॥ ११ ॥

कुटिलः कुन्तलहस्तः नीलिमनिभृतोऽब! पृष्ठतो लम्बी ।
मूर्ध्ना धृतो भवत्या राजति सुमनोभिरादृतो जगति ॥ १२ ॥

सीमन्तसत्पथोऽयं विभाति कुटिलांस्तमोभरप्रचुरान् ।
दीर्घेण युध्यमानान् मातः! संरक्ष्य पोषयन् कैश्यान् ॥ १३ ॥

निबिडोदितेषु मस्तक मधरीकुर्वत्सु कृष्णकेशेषु ।
अम्ब! तव पक्षपातः बंहीयानेव दृश्यते कोऽसौ? ॥ १४ ॥

जात्या गुणेन मातः! क्रियया जातान् यदृच्छया शब्दान् ।
निध्यातुमेव मन्ये चतुराननतां दधाति ते कान्तः ॥ १५ ॥

पुरतोऽवदातपक्ष्मप्रकटनविख्यातपाण्डितीपटिमा ।
पश्चात्तमःप्रकाण्डान् कलयति कल्याणि! लम्बमानांश्च ॥ १६ ॥

कचनिचयकालिमायं संतमसायोधनोद्यतो मन्ये ।
पत्युस्तवापि सञ्चरकलने पिदधाति लोचनानि दृढम् ॥ १७ ॥

वागीश्वरि! त्वदीये कचनिचये भाति वैजात्यम् ।
साम्यं कलयति पत्यौ वक्रिमसर्वस्व मन्यदा समताम् ॥ १८ ॥

सन्ततवेदसमूहाभ्यसनपटीया नयं बिधातापि ।
अम्ब! त्वदीयकैशिकगुरुनिकटात् वक्रिमाण मध्येति ॥ १९ ॥

संसृतिसागरतारणपटुतरतरणी त्रयीशिरस्सरणी ।
दर्शितसज्जनसरणी राजतु वाणी स्वयंभुवो राणी ॥ २० ॥

सरस्वतीस्तुतिः समाप्ता ।

## ॥ राजनामगर्भित प्रश्नोत्तर श्लोकाः ॥

(Compiled by N. S. Devanathachariar, Sanskrit Pandit, T. M. S. S. M. Library)

From the T. M. S. S. M. Library Mss. N. N. 13992

कस्मिन् तारकजिज्जनिः? शरवणे का विष्णुपत्नी? रमा
कस्तार्यो? भवसिन्धु रस्य जगतः कस्तारको? राघवः ।
को वन्द्यो? जनकः त्वदुत्तरगिरा माद्यक्षराख्यो महान्
दीर्घायुः सह पुत्रपौत्रनिकरै रस्तु क्षमां पालयन् ॥

१. श रवणे
२. र मा
३. भ वसिन्धुः
४. रा घवः
५. ज नकः

धत्ते कं फणिभुक्? कल.प मति वै नैल्यं क? बालाकचे
का गम्या? पदवी किमम्बुजतुषस्संबोधनं? सारस ।
का संबुद्धिरले? द्विरेफ जनिमत्तृष्णाहरं किं? जलं
प्रत्युक्त्यान्तिमवर्णसंघटितं तद्वेतनं विद्धि मे ॥

पचेवीसफलं*

From the T. M. S. S. M. Library Mss. N. N. 13945

केनाब्धि कपिवाहिनी समतरत्? कस्माज्जनि वेंधसः?
कस्मै दत्त मभीप्सितार्थंवरदं? कस्मिन् हवि र्हूयते? ।
केषामुग्रतपांसि? केषु हरयः? कश्च स्तुवन्त्यर्थिनः?
यः प्रश्नोत्तरमध्यवर्णघटित स्सोऽयं चिरं जीवतु ॥

१. से तु ना
२. ज ल जात्
३. द्वि जा य
४. पा व के
५. मु नी नाम्
६. व ने षु
७. दा ता रम्

---

* पचेवीसफलं=पञ्चविंशतिः पणानि ।

॥ श्रीः ॥

# *" सिद्धान्तचन्द्रिका सव्याख्या "

[श्रीरामानन्दसरस्वतीविरचिता सिद्धान्तचन्द्रिका श्रीगङ्गाधरसरस्वतीविरचितया व्याख्यया सहिता]

—:x:—

श्रीरामभद्रसंयमिचरणौ शरणं विधाय बोधाय ।
सिद्धान्तचन्द्रिकामृतसेकैस्संशोधयामि चेतस्स्वम् ॥ १ ॥

प्रणमदमरमौलिप्रस्फुरद्रत्नरश्मि-
प्रकरविमलदीपैर्नित्यनीराजितांघ्रिः ।
शिशिरकिरणधारी योगिहृद्पद्मचारी
कृपयतु मयि साम्बः कोऽपि संवित्कदम्बः ॥ १ ॥

श्रीरामसंयमीन्दोः सान्द्रां सिद्धान्तचन्द्रिकां प्रपिबन् ।
प्रथयति गङ्गाधरयतिभव्यचकोरस्तदुद्गतोद्गारान् ॥ २ ॥

इह खलु बहुनरभवपरम्परार्जितसुकृतपरिपाकजनितविवेकवैराग्यादिसाधनसम्पन्नमुमुक्ष्वभिलषितमोक्षोपायब्रह्मात्मैक्यज्ञाननिदानं सर्ववेदान्तसिद्धान्तसारसंग्रहरूपं प्रकरणं चिकीर्षुस्तत्रभवानाचार्यः चिकीर्षितस्य निर्विघ्नपरिसमाप्तिप्रचयगमनादये श्रीगुरुदेवतैक्यप्रतिसन्धानपूर्वकतन्नमस्कारलक्षणं मङ्गलमाचरन् अर्थादनुबन्धचतुष्टयं सूचयन् चिकीर्षितं प्रतिजानीते—**श्रीरामभद्रेति**। श्रीरत्र लक्ष्मीस्त्रयी च। 'ऋचः सामानि यजूंषि, सा हि श्रीरमृता सता'मिति श्रुतेः। श्रीमतो रामभद्रस्य तन्नाम्नस्संयमिनश्चरणौ। इह गुरुदेवतयोरेकाभिधानोपात्तत्वादैक्यं अभिसंहितम्। एकस्मिन्विषये धारणाध्यानसमाधयः संयमः। तदुक्तं भगवता पतञ्जलिना—'देशबन्धश्चित्तस्य धारणा, तत्र प्रत्ययैकतानता ध्यानं, तदेवार्थमात्रनिर्भासं स्वरूपशून्यमिव समाधिः, त्रयमेकत्र संयमः' इति। शरणं बोधप्रतिरोधकेभ्यो रक्षकं विधाय कृत्वा। अनेन रक्ष्यरनियोगिकरक्षकोत्कर्षबुद्धिरूपमानसनमस्कारलक्षणं मङ्गलमाचरितम्। बोधाय आत्मतत्वसाक्षात्काराय। सिद्धान्तचन्द्रिकामृतसेकैः सिद्धान्तो वेदान्ततात्पर्यार्थः इतरेषामप्रामाणिकत्वेन

सिद्धान्ताभासत्वात् तस्य चन्द्रिकेव चन्द्रिका आह्लादपूर्वकप्रकाशकत्वादन्वर्थनामायं देशिकोपदिष्टार्थ-संकलनात्मकः स्वकर्तृको ग्रन्थः सैवामृतं आत्यन्तिकमृत्युनिबर्हणात् तस्य सेकैरिव सेकैस्तदर्थानुसन्धानैः स्वं स्वीयं चेतः चित्तं संशोधयामि असंभावनादिमालिन्यनिरासेन विशदीकरोमि। अत्र कृतकृत्यस्यापि बोधायेति संशोधयामीति च विनयोक्तिरिति बोध्यम्। अस्य च वेदान्त-प्रकरणत्वात् तदीयैरेव विषयादिभिस्तद्वत्त्वं सूचितम्। तत्र हि ब्रह्मात्मैक्यं विषयः मोक्षः प्रयोजनं तत्कामोऽधिकारी बोधकत्वं च सम्बन्धः इति स्थितं, तदत्राऽपि बोधायेत्यनेन बोध्यम्। ब्रह्मात्मैक्यं विषयः तदेव च बुद्धं सत् प्रयोजनं बोधकत्वं सम्बन्धः अर्थादुक्तप्रयोजनकामोऽधिकारीति लभ्यते। श्रीरामः शरणं मम ॥

श्रीगुरुकृपाकटाक्षात्सारं शास्त्रस्य सकलमाकलयन्।
सुकृती कृतीह कश्चिच्छ्रुतिसुखमित्थं जगौ मिथस्सुहृदे ॥ २ ॥

न केवलमस्य ग्रन्थस्य स्वबोधः फलं किन्तु विस्तृतशास्त्राभ्यासालमानां शास्त्रसकलार्थ-संग्रहतया साहित्यरसगर्भितत्वेन सुखश्रवतया च विनैव श्रमं निःश्रेयसप्राप्तिरित्यस्य फलत्वं तत्सम्प्र-सायिविद्वत्सखिसंवादं प्रस्तौति — श्रीगुर्विति। इह संसारमण्डले कश्चिद्विरलः 'आश्चर्यो वक्ते'ति श्रुतेः सुकृती कृतपुण्यपुञ्जः अत एव कृती दुरधिगमतत्त्वसाक्षात्कारे तस्य च शिष्येषु सद्यः समर्पणे कुशलः पुरुषधौरेयः 'कषाये कर्मभिः पक्के ततो ज्ञानं प्रवर्तते' इति स्मृतेः, 'आश्चर्यो ज्ञाता कुशलानुशिष्टः' इति श्रुतेश्च। श्रीगुरुकृपाकटाक्षात् श्रीगुरोः कृपयैव यः कटाक्षः तस्मात्। अनेन कृतकृत्यस्य निरतिशयानन्दतृप्तस्य श्रीगुरोः सर्वतो नैरपेक्ष्येऽपि अनुग्रहादेव नैसर्गिकाद्दीनोद्धरणे प्रवृत्तिरिति दर्शितम्। शास्त्रस्य हि तस्य शासनाच्छंसनाद्वा वेदान्तशास्त्रस्य सकलं समग्रं सारं तात्पर्यविषयमर्थं आकलयन् करतलामलकवदपरोक्षयन् सन् श्रुतिसुखं 'यो वै भूमा तत्सुख'-मित्यादिश्रुतिप्रसिद्धं सुखं श्रोत्रसुखं यथा स्यात्तथेति क्रियाविशेषणं च। मिथः रहसि अति-गोप्यत्वात् सुहृदे शुद्धचित्ताय आप्तभक्ताय च 'प्रशान्तचित्ताय शमान्विताये'ति श्रुतेः, 'नाभक्ताय कदाचने'ति स्मृतेश्च, इत्थं वक्ष्यमाणप्रकारेण जगौ गीतिच्छन्दोबन्धेनोपादिदेश ॥ २ ॥

चित्त्वमकृत्रिममेकं ज्योतिर्निहितं गुहास्वसंख्यासु।
तदुपरि किमपि तमिस्रं त्रैलोक्यप्रदो विविच्य दर्शयति ॥ ३ ॥

बन्धस्यात्मतत्त्वाज्ञाननिबन्धनत्वेन तज्ज्ञानैकनिवर्त्यत्वात् ज्ञानस्य च तत्त्वमस्यादिवाक्यैक-साध्यत्वात् वाक्यार्थज्ञानस्य च पदार्थज्ञानाधीनत्वात् प्रथमं तत्पदार्थं स्वरूपतटस्थलक्षणाभ्यां निरूपयति **चित्रमित्यादिना** । अकृत्रिमं कृत्रिमं काल्पनिकं तद्विलक्षणं सत्यमित्यर्थः । एकं अद्वितीयं त्रिविधपरिच्छेदशून्यमिति यावत् । ज्योतिर्ज्ञानस्वरूपं ब्रह्म । अनेन पदत्रयेण स्वरूप-लक्षणोक्त्या तत्पदलक्ष्यमुक्तम् । ननु कथमस्याद्वितीयत्वं, जीवानां भेदेन सत्त्वात् अत आह निहितमित्यादि । असंख्यासु गुहासु बुद्धिलक्षणासु तत्संस्कारावच्छिन्नाविद्याप्रदेशलक्षणासु अविद्या-लक्षणास्वेव वा निहितं सन्निहितं स्थितमिति यावत् । ब्रह्मण एव बुद्ध्यादिदर्पणे प्रतिबिम्बितत्वात् तदवच्छिन्नत्वाद्वा जीवव्यपदेशभाक्त्वमिति नाद्वितीयत्वविरोध इति भावः । तथा च श्रुतिः- 'सत्यं ज्ञानमनन्तं ब्रह्म', 'यो वेद निहितं गुहायां परमे व्योमन्नि'ति । ननु तर्हि बुद्ध्याद्युपाधिभिरेव सद्वितीयत्वमित्याशङ्क्य तटस्थलक्षणोक्तिमुखेन परिहरति तदुपरीत्यादिना । तस्य ज्योतिष उपरि किमपि अनिर्वचनीयं अतर्क्यानन्तशक्तिकं च तमिस्रमिव तमिस्रं स्वाश्रयावरकमज्ञानं कर्तृ अदः प्रत्यक्षादिप्रमाणसन्निधापितं त्रैलोक्यं स्वपरिणामभूतलोकत्रयशरीरं विराज सूत्रात्मनोऽप्युपलक्षण एतत् । विविच्य प्रतिपदार्थं भेदं प्रकल्प्य दर्शयति प्रत्याययति । अनेन विक्षेपकत्वमुक्तम् । तथा च उपाधीनामाविद्यकत्वेन मिथ्यात्वात् न तैरपि सद्वितीयत्वमिति भावः । अनेन च प्रपञ्चा-कारपरिणाम्यविद्याधिष्ठानत्वरूपविवर्तोपादानत्वं ज्योतिःपरमार्थितमस्सूचनसर्वावभासनक्षमचित्-स्वरूपत्वलब्धसार्वज्ञ्यनिर्वाह्यसर्वकर्तृत्वरूपनिमित्तत्वसहकृतं सदभिन्ननिमित्तोपादानत्वपर्यवसितं तटस्थ-लक्षणमुक्तं भवति । तथाहि श्रुतिः —'तदात्मानꣳ स्वयमकुरुते'ति । एवं चार्थात्तत्पदवाक्यार्थौ दर्शितः । उपक्रमगतं चित्रपदं यथायोग्यं सर्वत्र सम्बध्यते । तथाहि वाङ्मनसागोचरस्वप्रकाश-चिदेकरसमात्मतत्त्वं स्वतश्चित्रं, तस्य चासङ्गाद्वितीयस्य प्रतिबुद्ध्यादि पर्याप्य वर्तनं ततोऽपि चित्रं, तस्मिन्नेव चाज्ञानविरोधिन्यज्ञानाश्रयत्वं ततोऽपि चित्रं, अज्ञानस्य च स्वतो निस्सत्तास्फूर्ति-कस्य त्रैलोक्यात्मना स्वप्रदर्शकत्वं ततोऽपि चित्रम् । अर्थान्तरे तु लौकिकदीपादिज्योतिषोऽकृत्रिमत्वं चित्रं, तस्य चैकस्यानेकगुहानिहितत्वं ततोऽपि चित्रं, तस्मिंश्च तमिस्रविरोधिनि तमिस्राश्रयत्वं ततोऽपि चित्रं, तमिस्रस्य च दर्शनविरोधिनो विविच्य त्रैलोक्यप्रदर्शकत्वं ततोऽपि सुतरां चित्रमिति । इह च ज्योतिषो गुहासु निहितमिति प्रत्यक्त्वोक्त्या प्रपञ्चस्य ब्रह्मविवर्तत्वतदज्ञानपरिणामत्वोक्त्या च सांख्याभिमतपुरुषनानात्वं वैशेषिकाद्यभिमतमीश्वरताटस्थ्यं तत्कल्पितं जगतः प्रधानपरमाणूपादानकत्वं च 'एको देवस्सर्वभूतेषु गूढः रूपं रूपं प्रतिरूपो बभूव । इन्द्रो मायाभिः पुरुरूप ईयते । मायां तु प्रकृतिं विद्यान्मायिनं तु महेश्वरमित्यादिश्रुतिविरोधान्निरस्तं वेदितव्यम् ॥ ३ ॥

दीपः कोऽपि समिन्धे स्नेहदशाधारहीनमस्पन्दः ।
यस्य किल किमपि कज्जलमभवज्जगदण्डमद्भुतपिचण्डम् ॥ ४ ॥

ननु जीवाभेदे परस्य पारतन्त्र्याद्रागादिदोषजागराद्यवस्थास्थूलादिभोगायतनोत्क्रान्त्यादि-क्रियाप्रमुखसांसारिकधर्मप्रसक्त्या मायानियन्तृत्वेन जगन्निर्मातृत्वानुपपत्तिरित्यत आह— दीप इति । कोऽपि अपूर्वः अस्पन्दः उत्क्रान्त्यादिक्रियासामान्यशून्यः 'निष्कलं निष्क्रियमि'त्यादिश्रुतेः । दीपयति स्वभासा सूर्यादीनीति दीपः परमात्मा । 'तमेव भान्तमनुभाति सर्वं तस्य भासा सर्वमिदं विभाति' इति श्रुतेः । स्नेहदशाधारहीनं स्नेहो रागः द्वेषादेरप्युपलक्षणमेतत् । दशा बाल्यादि-जागरादिश्च । आधारः स्थूलादिभोगायतनं एतैर्हीनं यथा स्यात्तथा समिन्धे सम्यक् प्रकाश्य धर्मासंस्पर्शितया इन्धे प्रकाशते । 'निरवद्यं निरञ्जनम्' । 'नान्तःप्रज्ञं न बहिःप्रज्ञं नोभयतःप्रज्ञं न प्रज्ञानघनं' । 'अकायमव्रणम्' । 'अवागमनः अत्रायं पुरुषः स्वयं ज्योतिरि'ति च श्रुतेः । अयं भावः— जीवाभेदे परस्य किं निष्कृष्टचित्स्वरूपे सांसारिकत्वापत्तिः उत बिम्बत्वविशिष्टे ? नाद्यः, जीवतद्धर्मावभासकस्य तस्य भास्यधर्मानाश्रयत्वात् । न द्वितीयः, उपाधेः प्रतिबिम्बपक्षपाति-त्वात् अविद्याप्रतिबिम्बभूतजीवगतौपाधिकधर्माणां बिम्बभूतेश्वरासंस्पर्शेन तस्य स्वातन्त्र्याविघा-तादिति । ननु ब्रह्मैव जगदाकारेण परिणमतां, किमविद्ययेत्याशंक्याह यस्येत्यादि । यस्य आत्मदीपस्य आश्रयत्वविषयत्वसाधारणी षष्ठी । किमपि अपूर्वं कज्जलं अविद्यालक्षणं अद्भुत-पिचण्डं सर्वाश्चर्यगर्भं जगदण्डं सहिरण्यगर्भं ब्रह्माण्ड अभवत्किलेति श्रौतप्रसिद्धौ । अयमभि-सन्धिः — न तावत् ब्रह्मणः कार्त्स्न्येन परिणामः, प्रपञ्चातिरेकेण ब्रह्माभावप्रसङ्गात्, नाप्येक-देशतः, निष्कलमिति तन्निरवयवत्वश्रुतिव्याकोपात् । तस्मात्तस्य 'मायां तु प्रकृतिं विद्यान्मायिनं तु महेश्वरमि'ति श्रुतेः मायाद्वारा विवर्तोपादानत्वमेव युक्तमिति । अत्र कोपीत्यनेन ब्रह्मदीपे तैलादि-स्नेहवर्तिपात्रसापेक्षसस्पन्दप्रसिद्धदीपवैलक्षण्यं सूच्यते । किमपीत्यनेन च मायाकज्जले प्रसिद्ध-कज्जलवैलक्षण्यमिति ॥ ४ ॥

विसृजति यदैव भुवनं व्योमनि चिन्नाम्नि कालिका काचित् ।
परितो बत प्लवन्ते ब्रह्माद्यभिधानफल्गुमण्डूकाः ॥ ५ ॥

ननु 'हिरण्यगर्भस्समवर्तताग्रे भूतस्य जातः पतिरेक आसीत्' । 'आदिकर्ता स भूतानां ब्रह्माग्रे समवर्तत' इत्यादिश्रुतिस्मृतिभ्यो हिरण्यगर्भस्य स्रष्टृत्वावगमात् किं तद्व्यतिरिक्तब्रह्मणः

स्रष्टृत्वकल्पनयेत्याशङ्क्याह-**विसृजतीति**। चिन्नाम्नि चिदिति नाम संज्ञा यस्य तस्मिन् व्योमनि आकाशे काचित् अपरिच्छिन्नस्यापि चिदाकाशस्यावरणसमर्था कालिका परशक्तिरूपा माया मेघमाला च यदैव सर्गाद्यक्षणे भुवनं चतुर्दशभुवनात्मकं विराजं जलं च विसृजति वियदादि-सूक्ष्मस्थूलभूतक्रमेण विविधं सृजति। तस्माद्वा एतस्मादात्मनः आकाशः सम्भूतः। आकाशाद्वायुः। वायोरग्निः। अग्नेरापः। अद्भ्यः पृथिवी' इत्यादिश्रुतेः। वर्षति च। यत्तदोर्नित्यसम्बन्धात्। तदैव ब्रह्माद्यभिधानफल्गुमण्डूकाः ब्रह्मेत्यादीनि अभिधानानि येषां हिरण्यगर्भविराड्देवर्षिनरतिर्य-गादीनां त एव फल्गवः क्षुद्रा मण्डूकाः भेकाः परितः सर्वतः प्लवन्ते स्वस्वोचितकार्येषु चेष्टन्ते बतेति खेदे। दृश्यन्ते हि प्रावृष्यभिनवजलबिन्दुभिः आर्द्रीकृतायां भुवि क्षुद्रा मण्डूकाः परितः प्लवमानाः। इत्थं च यो ब्रह्माणं विदधाति पूर्वं यो वै वेदांश्च प्रहिणोति तस्मै। हिरण्यगर्भं जनयामास पूर्वं' इत्यादिश्रुतिभ्यो हिरण्यगर्भादीनामीश्वरसृज्यत्वतदधीनज्ञानवत्त्वावगमात् न तेषां सर्वस्रष्टृत्वं उदाहृतं। श्रुतिस्मृत्योस्तु विर डादिमात्रस्रष्टृत्वपरतेति भावः। श्रीराम जय॥ ५॥

सविधेऽपि दृश्यते ननु चिन्नाम्नि व्योम्नि कालिमा कश्चित्।
सहते न विचारमसौ सृजति च रूपाणि कोटिशश्चित्रम्॥ ६॥

ननूक्तमज्ञानं मानग्राह्यं न वा। आद्ये प्रामाणिकस्य तस्य ज्ञाननिवर्त्यत्वासंभवः। द्वितीये खपुष्पवदसतस्तस्य जगदुपादानत्वानुपपत्तिरिति आशंक्याह **सविध** इति। सविधेऽपि प्रत्यक्त्वा-दतिनिकटेऽपि उपोपसर्गः सामीप्ये नतप्रतीचि समाप्यत इति वार्तिकात्। चिन्नाम्नि व्योम्नि चित्संज्ञके नभसि कश्चित् अघटितघटनापटीयान् कालिमा अज्ञानलक्षणं नैल्यं दृश्यते 'अहमज्ञः' इत्याकारेणानुभूयते। नन्विति सर्वजनीनानुभवसिद्धत्वद्योतनार्थं तथाचाज्ञानस्य साक्षिप्रत्यक्ष-सिद्धत्वान्न मानग्राह्यत्वं। साक्षिणो भ्रमसाधारणस्य मानत्वाभावात्। नाप्यसत्वं, असतः प्रत्यक्षाविषयत्वादिति भावः। ननु च तदज्ञानं चिदात्मनो भिन्नं अभिन्नं वा। आद्ये द्वैतापत्तिः। द्वितीये तस्य नित्यत्वापत्तेः अनिर्मोक्षप्रसङ्गः। ज्ञानाज्ञानयोरैक्यानुपपत्तिश्च। भिन्नाभिन्नत्वं तु विरोधादसम्भवि। किंच, भिन्नत्वपक्षे तस्य भावत्वे अहमज्ञ इति नञर्थोल्लिखितधीविषयतानु-पपत्तिः। अभावत्वे जगदुपादानत्वानुपपत्तिरित्याशंक्याह सहत इत्यादि। असौ कालिमा विचारं न्यायैर्निरूपणं न सहते। भेदाभेदादिना कथचिदपि निर्वक्तुमशक्यत्वात्। भावरूपत्वं तु विरोधार्थकनञर्थोल्लिखितधीविषयत्वेनाधर्मादिवदिष्टमेव। न हि अहमज्ञः इत्यनुभवस्य

ज्ञानसामान्याभावो विषयः। धर्मप्रतियोगिज्ञानसत्त्वे विषयाभावेन तदसत्त्वे च सामग्र्यभावेन तस्य दुर्ग्रहत्वात्। नापि ज्ञानविशेषाभावस्तद्विषयः। तत्र ज्ञानत्वस्यैव प्रतियोगितावच्छेदकत्वानुभवादिति भावं पक्षान्तरे विचारं विहगसंचारं। नन्वज्ञानस्य भावरूपत्वेऽपि सत्यस्य प्रपञ्चस्यात्मवत्तत्कार्यत्वानुपपत्तिरित्याशंक्य 'यत्र हि द्वैतमिव भवति तदितर इतरं पश्यति'। 'तस्य त्रय आवसथास्त्रयः स्वप्ना' इत्यादिश्रुतेः प्रपञ्चो मिथ्या दृश्यत्वात् शुक्तिरजतवत् इत्यनुमानाच्च प्रपञ्चस्य सत्यत्वाभावनिश्चयात् अज्ञानकार्यत्वेन किंचिद्बाधकमित्याशयवानाह सृजति चेत्यादि। कोटिशः असंख्यजातीयानि रूपाणि कर्मकरणव्युत्पत्तिभ्यां नामरूपात्मकं जगत् अन्यत्र नीलपीतादीनि। चित्रं अद्भुतं यथा स्यात्तथा सृजति। चकारः पूर्ववाक्यार्थसमुच्चये। इत्थं च अनिर्वचनीयत्वे सति कार्यमात्रोपादानत्वमज्ञानलक्षणं सूचितम्। आत्मवारणाय सत्यन्तं, अविद्यासंम्बधादिवारणायोत्तरदलं, तत्र मृदादिवारणाय मात्रान्तम्। अत्र कश्चिदित्यनेन दूरैकदृश्यविहगसंचारसहिष्णुरूपांतरानारम्भकनभोनैल्यवैलक्षण्यं सूच्यते ॥ ६ ॥

**दिवि सूक्ष्मसूत्रमादौ तस्मिन्सुविशंकटं कटाहमथ ।**
**तत्र समुद्रवनाद्रीन्दर्शयति महेन्द्रजालिकः को नु ॥ ७ ॥**

ननु ब्रह्मणो जगद्विवर्तोपादानत्वे सर्पाद्यधिष्ठानरज्ज्वादिवत् चक्षुरादिवेद्यत्वापत्तिः, न च रूपाद्यभावेनायोग्यत्वात् तदनापत्तिः, तर्हि अनैन्द्रियकस्यैन्द्रियकाध्यासाधिष्ठानत्वानुपपत्तिरित्याशंक्य आह **दिवीति**। महेन्द्रजालिकः महेन्द्रजालाख्यमायया युक्तः अर्थात्कश्चित्पुरुषविशेषः आदौ सर्गारम्भसमये दिवि द्योतनात्मके स्वरूपे नभसि च सूक्ष्मसूत्रं सूक्ष्मभूतोपाधिकं हिरण्यगर्भं सूक्ष्मतन्तुं च दर्शयति। अथ अनन्तरं तस्मिन् सूक्ष्मसूत्रे सुविशङ्कटं अतिविशालं कटाहं ब्रह्माण्डशरीरं विराजं प्रसिद्धकटाहं च दर्शयति। तत्र कटाहे समुद्रवनाद्रीन् दर्शयति। स कोन्विति दर्शयितुरधिष्ठानभूतस्य रूपाद्यभावात् चक्षुरादिप्रत्यक्षेण दुरधिगमत्वं, अत एव च तद्व्याप्यलिङ्गादिग्रहाभावादनुमानादिना दुरधिगमत्वं सूच्यते। महेन्द्रजालिको हि प्रथममाकाशे सूक्ष्मं सूत्रं प्रसार्य तदुपरि दर्शिते महाकटाहे समुद्रादीनसंभावितानपि दर्शयतीति प्रसिद्धम्। इदमत्राभिसंहितम्। किं ब्रह्मणः सोपाधिकस्य चक्षुरादिवेद्यत्वमापाद्यते किं वा निरुपाधिकस्य। नाद्यः, सर्पाद्यधिष्ठानरज्ज्वादेः इदंत्वेनेव प्रपञ्चाधिष्ठानस्य ब्रह्मणः सन् घटः, स्फुरन् घटः इत्याद्यनुभवे सत्वादिना विषयत्वस्येष्टत्वात्। न द्वितीयः, रूपाद्यभावेन तदयोग्यत्वात्। 'न चक्षुषा पश्यति कश्चनैन-

मि'त्यादिश्रुतेः। न च इन्द्रिययोग्यमेव अध्यासाधिष्ठानमिति नियमः। अयोग्यस्यापि नभसो नैल्याद्यध्यासाधिष्ठानत्वदर्शनात्। तदुक्तं भगवता भाष्यकृता—'अप्रत्यक्षेऽपि ह्याकाशे बालास्तल-मलिनताद्यध्यस्यन्ती'ति। श्रुतिश्च 'आराममस्य पश्यन्ति न तं पश्यति कश्चने'ति। श्रीरामः शरणम्॥ ७॥

जरठाऽपि काचिदसती संदर्श्य गुणान्परस्य पुरुषस्य।
सङ्गं विनैव हसितैस्सर्वस्वं हरति हन्त किं ब्रूमः॥ ८॥

एवं तत्पदार्थं स्वरूपलक्षणपरीक्षाभिः संक्षेपतो निरूप्य वक्ष्यमाणमहावाक्यार्थोपयोगितया ब्रह्मण एव मायया जीवभावप्राप्तिप्रदर्शनमुखेन त्वंपदार्थं निरूपयति जरठेत्यादिना। काचित् अतर्क्यानेकशक्तिका असती अपरमार्थभूता माया स्वैरिणी च जरठा अनादिः 'अजामेकामि'ति श्रुतेः। प्रकृतिं पुरुषं चैव विद्ध्यनादी उभावपीति स्मृतेश्च। अन्यत्र वृद्धा ईदृशी सत्यपि परस्य पुरुषस्य परमात्मनः अन्यपुरुषस्य च गुणान् सत्वादीन्, 'लोहितशुक्लकृष्णामि'ति श्रुतेः। 'सत्वं रजस्तम इति गुणाः प्रकृतिसम्भवाः' इति स्मृतेश्च। अन्यत्र कृत्रिमलावण्यादिगुणान् सन्दर्श्य सम्यक् स्वतत्वप्रतिसन्धाननिरवकाशं यथा स्यात्तथा विषमतया समर्प्य संगं विनैव एकस्यासङ्गत्वा-दपरस्य च वञ्चनीयत्वात् संबन्धं विनैव हसितैः हसितवदनायाससम्पादितैः जागरादिविक्षेपैः हासैश्च सर्वस्वं पूर्णमात्मस्वरूपं समग्रधनं च हरति जीवभावेन परिच्छिद्यापलपति अपहरति च। हन्तेति खेदे। किं ब्रूम इत्यनेन नित्यमुक्तस्य निरतिशयानन्दैकरसस्य विविधपरिच्छेदविधुरस्य असङ्गस्वप्रकाशचित्स्वरूपस्यापि परस्य ब्रह्मणो, बद्धो दुःखबहुलः परिच्छिन्नः देहेन्द्रियमनोबुद्ध्यादि-सम्बद्धः मूढोऽहमित्यादिजीवभावमनुभावयन्ती हन्त महामायेयमघटितघटनापटीयसी परमाश्चर्य रूपेति ध्वन्यते। श्रीमहेश्वरो रक्षतु॥ ८॥

शुचिरपि पुमान्प्रमादाच्छोचति मायापिशाचिकाक्रान्तः।
पश्यति बहुदुस्स्वप्नान्भयमंचति यत्र पञ्चभूतेभ्यः॥ ९॥

परस्यैव मायया जीवभावमापन्नस्य संसरणप्रकारवर्णनमुखेन त्वंपदवाच्यार्थं दर्शयति **शुचिरपीत्यादिना**। शुचिः वस्तुतोऽविद्यातत्कार्यैरसंस्पृष्टः पवित्रश्च। 'असङ्गो ह्ययं पुरुषः' 'शुद्धमपापविद्धमि'त्यादिश्रुतेः। ईदृग्विधोऽपि पुमानात्मा प्रसिद्धः कश्चन पुरुषश्च प्रमादात् स्वरूपाविचारात् कदाचिदाचमनाद्यनवधानाच्च हेतोः, मायापिशाचिकाक्रान्तः मायैव पिशाचिका,

पुरुषस्य स्वाभाविकस्वच्छत्वादिधर्मतिरोधानेन तदनुरूपविविधदुश्चेष्टितेहेतुत्वात् अन्यत्र माया-पिशाशिका भ्रमविजृम्भितमिथ्यापिशाचिका तयाऽऽक्रान्तः वशीकृतः सन् शङ्काविषादेरपि मरणहेतुत्ववत् कल्पितपिशाचिकाया अपि कार्यकरत्वसम्भवात् बहुदुस्स्वप्नान् बहून् विपुलान-ख्यातासंख्यातान्वा दुस्स्वप्नान् जागराद्यवस्थारूपान्। 'तस्य त्रय आवसथास्त्रयस्स्वप्नाः' इति श्रुतेः। स्पष्टमन्यत्र। पश्यति। यत्र येषु दुस्स्वप्नेषु पञ्चभूतेभ्यः पञ्चभ्यो भूतेभ्यः देहेन्द्रियविषयाद्याकार-परिणतपृथिव्यादिभ्यो देवयोनिविशेषेभ्यश्च। अयं अश्नुति प्राप्नोति। 'यदा ह्येवैष एतस्मिन्नुदर-मन्तरं कुरुते। अथ तस्य भयं भवति'। 'द्वितीयाद्वै भयं भवति' इत्यादिश्रुतेरिति भावः॥ ९॥

स्वच्छामपि सन्निधितः स्वच्छायाहारिणीमिमां कुधियम्।
स्वीकृत्य किमिति पुरुषः क्लिश्नाति बताविवेकिनः क सुखम्॥ १०॥

मायाऽपि न स्वरूपेणानर्थकारिणी, किन्तु बुद्ध्यात्मना परिणता तत्तादात्म्याध्यास-द्वारैवेति दर्शयति स्वच्छामिति। स्वच्छां निर्मलामनवद्याङ्गीं च ईदृशीमपि सन्निधितः सन्निधानात् स्वच्छाया हारिणीं स्वप्रतिबिम्बग्राहिणीं स्वशोभानाशिनीं च इमां साक्षिप्रत्यक्षां पुरोवर्तिनीं च कुधियं बन्धहेतुत्वात् कुत्सितां धियं बुद्धिं 'मन एव मनुष्याणां कारणं बन्धमोक्षयोः। बन्धाय विषयासक्तं मुक्तौ निर्विषयं स्मृतमि'त्यमृतबिन्दुश्रुतेः। अन्यत्र दुष्टहृदयां स्त्रियं स्वीकृत्य स्वत्वेन आत्मत्वेन गृहीत्वा स्वकीयत्वेन परिगृह्य च पुरुषः आत्मा कश्चित्प्रसिद्धश्च किमिति क्लिश्नाति किमर्थमविद्या-ऽस्मितारागद्वेषाभिनिवेशलक्षणान् बुद्धिधर्मान् पञ्चक्लेशान् स्वस्मिन्नारोपयति। ध्यायतीव लीलायतीवेत्यादिश्रुतेः। स्फुटमन्यत्र। बतेति खेदे। उक्तमर्थमर्थान्तरन्यासेन द्रढयन् अनर्थस्य विवेक-निरस्यतां सूचयति अविवेकिन इति। अविवेकिनः स्वरूपमविवेचयतः हिताहितविवेकहीनस्य च क सुख। केत्याक्षेपे। सुखं नास्तीति यावत्। बतेति खेदे। दृश्यन्ते हि लोके विषयलम्पटतया विवेकशून्याः दुष्टस्त्रीपरिग्रहात् दुरन्तदुःखभाज इति। श्रीरामश्शरणं मम॥ १०॥

कामं समेतु मोहात्कामखनिं नाम कामपि प्रमदाम्।
पुरुषश्चिरन्तनोऽसौ भोगस्तु सखे! खपुष्पमेतस्य॥ ११॥

नन्वात्मनि कर्तृत्वभोक्तृत्वादेः संसारक्लेशस्य अन्तःकरणोपाधिकत्वेऽपि तण्डुलादावग्नि-विक्लित्यादिवत् सत्यत्वान्न विवेकनिरस्यतेत्याशंक्याह काममिति। हे सखे प्रस्तुतप्रशिष्यसम्बोधन-मेतत्। चिरन्तनः शाश्वतः जन्मादिसर्वविकाररहित इति यावत्। वृद्धश्च। असौ पुरुष आत्मा

प्रसिद्धश्च। कामरवनिं नाम कामादिवृत्त्युपादानतया। कामस्संकल्पोविचिकित्साश्रद्धाऽश्रद्धाधृति-रधृतिर्ह्रीर्धीर्भीरित्येतत्सर्वं मन एवेति श्रुतिप्रसिद्धां अर्थाद्बुद्धिं मदनोद्दीपकतया अन्वर्थाभिधानां च कामपि दुर्भेदसंश्लेषामवाङ्मनसगोचरसौन्दर्यविभ्रमादिशालिनीं च प्रमदां प्रचुराभिमानां स्त्रियं च। मोहात् स्वरूपापरिज्ञानात् वैयर्थ्यापरिज्ञानाच्च कामं अत्यन्तं समेतु सम्यक् तादात्म्येन अतिस्नेहेन च एतु सम्बध्नातु। किन्तु एतस्य चिरन्तनपुरुषस्य भोगः सुखदुःखानुभवः। कर्तृत्वादेरप्युपलक्षणम्। स्त्रीसुखं च। खपुष्पम्। अत्यलीकं। 'यत्र यदध्यासः तत्कृतेन गुणेन दोषेण वा अणुमात्रेणापि स न सम्बद्ध्यते' इति 'वृद्धस्य तरुणी विषमि'ति च न्यायाभ्यामिति भावः। एतदुक्तं भवति। सावयवे तण्डुलादावग्निसंयोगादिना अवयवगति श्लेष-विशेषरूपविक्लित्यादिविकारसम्भवेऽपि निरवयवकूटस्थचिदात्मनि भ्रममात्रातिरेकेण न वस्तुतः कश्चिदपि विकारगन्धः संभवतीति भवत्येव तस्य विवेकानिरस्यत्वम्। एवं चाहङ्कारनिष्कृष्टशुद्ध-चिदात्मा त्वंपदलक्ष्य इति दर्शितम्। तथा च सांसारिकसुखस्य मरुमरीचिकासलिलसंनिभत्वात् ततो विरक्तेन परमानन्दस्वरूपलाभलक्षणमोक्षायैव यतितव्यमिति भावः। अत्र यद्यपि संसारस्य परीक्षकदृष्ट्याऽनिर्वचनीयत्वमेव ; तथाऽपि श्रौतदृष्टिमवष्टभ्य खपुष्पमित्युक्तम्। तदुक्तं श्रीमद्विद्या-रण्यचरणैः — तुच्छाऽनिर्वचनीया च वास्तवी चेत्यसौ त्रिधा। ज्ञेया माया त्रिभिर्बोधैः श्रौतयौक्तिक-लौकिकैरिति। श्रीरामश्शरणम्॥ ११॥

> विषयाः पुराणि कोशा विभ्रमजीवातुरसदृगवरोधः।
> सन्त्यपि तु न सन्तुष्यति सम्राडात्मा यतो बताऽस्वस्थः॥ १२॥

ननु सांसारिकसुखस्याऽपि सामग्र्यविच्छेदसम्पत्तौ सातत्यसंभवात् परमपुरुषार्थत्वे कुतोऽस्य हेयत्वमित्याशंक्याह **विषया इति**। विषयाः शब्दादयः देशाश्च। पुराणि शरीराणि, ज्ञानेन्द्रियपञ्चकं, कर्मेन्द्रियपञ्चकं, प्राणपञ्चकं, भूतपञ्चकं, अन्तःकरणचतुष्कं, अविद्या कामः कर्म चेत्यष्टपुराणि वा। अन्यत्र नगराणि। कोशाः अन्नमयप्राणमयमनोमयविज्ञानमयानन्दमयाख्याः, पञ्चकोशाः अन्यत्र धनसञ्चयाः। विभ्रमजीवातुरसदृगवरोधः विविधानां भ्रमाणां जीवातुर्निदान-भूतः रसदृशः, रसः सुखं। "रसो वै सः। रसꣳह्येवायं लब्ध्वाऽऽनन्दी भवती"ति श्रुतेः। तदात्मिकायाः दृशः स्वरूपचैतन्यस्य अवरोधः आवरणम्। अन्यत्र विभ्रमजीवातुरितिच्छेदः। विभ्रमाणां विलासानां जीवातुरुज्जीवकः असदृक् अनुपमः अवरोधः अन्तःपुरं प्रेयसीति यावत्। एवमादीनि भोगसाधनानि सन्ति। अपितु परन्तु सम्राडात्मा सम्यग्राजत इति सम्राट् स्वप्रकाशः

आत्मा अन्यत्र सम्राजः सार्वभौमस्य आत्मा बुद्धिः न सम्तुष्यति सन्तोषं न लभते । तत्र हेतुमाह । यतः यस्मात्कारणात् अस्वस्थः स्वरूपप्रच्युतः रुग्णश्च । वर्तत इति शेषः । सांसारिकसुखाभासस्य बहुलायाससाधनाधीनत्व सातिशयत्व स्पर्धाऽसूयातिरस्कारप्रसक्तत्व क्षणभङ्गुरत्वादि दोषदुष्टत्वात् सामग्र्यविच्छेदस्य दुस्संपादत्वाच्च । विमर्शे दुःखरूपत्वमेवेति न पुरुषार्थत्वम् । यदल्पं तन्मर्त्यं नाल्पं सुखमस्तीत्यादि श्रुतेः । अनित्यमसुखं लोकं इत्यादिस्मृतेः । दुःखमेव सर्वं विवेकिन इति पातञ्जलाच्च । किन्तु निर्मृष्टनिखिलदुःखानुषङ्गनित्यनिरतिशयानन्दस्वरूपावस्थितिरेव परमपुरुषार्थः । यो वै भूमा तत्सुखम् । एषोऽस्य परम आनन्दः । पुरुषान्न परं किञ्चित् । सा काष्ठा सा परा गतिः । एतस्यैवानन्दस्यान्यानि भूतानि मात्रामुपजीवन्ति । तमात्मस्थं येऽनुपश्यन्ति धीराः तेषां सुखं शाश्वतं नेतरेषाम् । तरति शोकमात्मवित् । इत्यादिश्रुतिभ्यः । य लब्ध्वा चापरं लाभं मन्यते नाधिकं ततः । यस्मिन्स्थितो न दुःखेन गुरुणाऽपि विचाल्यते ॥ आत्मलाभान्न परं विद्यत इत्यादिस्मृतेश्च । यथा नानादेशनगरकोशविलासिन्यादिसकलसुखसंभारसम्पन्नस्याऽपि सार्वभौमस्य ज्वरादिवशादस्वस्थस्य सर्वं न सुखाय भवति; अपितु दुःखायेति स्वास्थ्यमेव तस्य सुखहेतुस्तथेति भावः ॥ १२ ॥

प्रकृतिविवेकविहीनः प्रभुरेष पुरस्य पाटितद्वारः ।<br>
निद्राति यदवरोधे निघ्नन्ति ततः प्रमत्तममुमरयः ॥ १३ ॥

वैषयिकसुखस्य न केवलं दुःखरूपत्वं किन्त्वज्ञस्य प्रमादिनो विवेकवैधुर्यादिन्द्रियाण्यनिगृह्णतः कामक्रोधादिप्रयुक्तत्वात् तत्प्रयोजकत्वाच्च दुरन्तनानादुःखचक्रबीजत्वमपि भवतीत्यभिसन्धायाह **प्रकृतीति** । एषः विधिप्रातिकूल्यविवशः पुरस्य देहस्य नगरस्य च प्रभुः अधिष्ठाता जीवो राजा च यद्यस्मात्कारणात् प्रकृतिविवेकविहीनः प्रकृतेर्माया तत्कार्यतः विवेकः असंभेदज्ञानं प्रकृतीनां प्रजानां विवेको मर्यादापालनं च तद्रहितः सन् पाटितद्वारः असंवृतचक्षुरादिकरणद्वारः उद्घाटितपुरद्वारश्च सन् अवरोधे अज्ञानावरणे अन्तःपुरे च निद्राति नितरां कुत्सितदशां प्राप्नोति आत्मानं न प्रबुध्यते वा । अन्यत्त स्वपिति । ततः तस्मात्कारणात् प्रमत्तं विचारविधुरं अनवहितं च अमुं पुरस्वामिनं अरयः कामक्रोधलोभमोहमदमत्सरलक्षणाः षडरयः प्रसिद्धशत्रवश्च । निघ्नन्ति मुहुर्मुहुर्निरयस्थावरादिनानादुरवस्थाप्रापणेन दुःखीकुर्वन्ति हिंसन्ति च । लोके हि राजा प्रजाविमर्शहीनः प्रोद्घाटितपुरद्वारः स्वयमसावधानः अन्तःपुरे निद्राणः सन् शत्रुभिर्हन्यत इति प्रसिद्धम् । श्रीरामाय नमः ॥ १३ ॥

**आकस्मिकी स्वदेशादपसृतिरतिसौख्यहानिरविभुत्वम् ।**
**श्रुतिनयनमान्द्यमरिभिः बन्धश्च महात्मनो दशेयमहो ॥ १४ ॥**

औपनिषदमसङ्गमपरिच्छिन्नमानन्दमहार्णवमात्मतत्त्वं पर्यालोचयन्नमुष्य इयमत्यन्तमसंभाविताऽप्यनर्हाऽपि सांसारिकदुर्दशा हन्त! कथमित्र सम्पन्नेत्याश्चर्यविषादावभिनयन्नाह **आकस्मिकीति** । महात्मनः महतः अपरिच्छिन्नस्य आत्मनः महानुभावस्य राज्ञश्च आकस्मिकी अतर्कितहेतुका स्वदेशात् स्वस्वरूपात् स्वीयराष्ट्राच्च अपसृतिः प्रच्युतिः अतिसौख्यहानिः निरतिशयानन्दतिरोभावः साम्राज्यसुखापगमश्च अविभुत्वं परिच्छिन्नता प्रभुत्वहानिश्च श्रुतिनयनमान्द्यं श्रुतिषु उपनिषत्सु नयनेषु करणव्युत्पत्त्या युक्तिषु च मान्द्यं अपाटवं श्रोत्रनेत्रापाटवं च अरिभिः कामादिभिः शत्रुभिश्च बन्धः संसारः नहनं च । चकारोऽनुक्तदुर्दशान्तराणां समुच्चयार्थः । इयमुक्तरूपा अनुभूयमाना असम्भाविता अनुचिता च दशा दुरवस्थाऽत्र सम्पन्नेति शेषः । अहो इत्याश्चर्यविषादयोः । एवं संसारदुर्दशाया अनर्हत्वोक्त्या हेयत्वस्यासंभावितत्वोक्त्या च भ्रमविजृम्भितत्वस्य सूचनेन ततो विरज्य तन्निवृत्त्युपायतत्त्वज्ञानसाधनश्रवणादाववश्यं यतितव्यमिति दर्शितम् । पक्षान्तरेऽपि शौर्यौदार्यादिसकलगुणशालिनः सार्वभौमस्याऽऽकस्मिकः कुलपरम्परागतराज्यभ्रंशः विविधभोगवियोगः प्रभुत्वहानिः आन्ध्यबाधिर्याद्याकुलता शत्रुकृतबन्धश्चेत्यादिदुर्दशां पश्यन्तः तदीयपूर्ववैभवं च स्मरन्तः साधवः साश्चर्यं खिद्यन्त इति प्रसिद्धम् ॥ श्रीरामश्शरणम् ॥ १४ ॥

**तमसि निलीय हरन्तं दुर्बुद्धिवशेन निरवधिपरस्वम् ।**
**पथि पथि गुणेन बद्ध्वा भ्रमयति पुरुषं करालकालभटः ॥ १५ ॥**

संसारस्योक्तं दुर्दशात्वं वैराग्यदार्ढ्याय प्रपञ्चयति **तमसीति** । तमसि अज्ञाने अन्धकारे च निलीय तिरोभूय दुर्बुद्धिवशेन दुष्टान्तःकरणतादात्म्यापत्तिरूपत्वात्तत्त्वेण पापबुद्ध्यधीनतया च निरवधिपरस्वं अपरिच्छिन्नसर्वोत्कृष्टस्वस्वरूपं अपरिमितपरधनं च हरन्तं परिच्छिन्दन्तमपहरन्तं च पुरुषं आत्मानं तस्करं च गुणेन सत्वादिना रज्वा च बद्ध्वा उपासनैः अग्निहोत्रादिविहितकर्मभिः कलञ्जभक्षणादिनिषिद्धकर्मभिश्च वशीकृत्य अन्यत्र स्पष्टम् । करालकालभटः उग्रः कालरूपो भटः कालवर्णः पदातिश्च । पथि पथि उत्तरदक्षिणनिरयमार्गेषु प्रतिमार्गं च । भ्रमयति परिभ्रमणं कारयति । तत्र सात्विकं पुरुषं विद्यया देवलोकं, राजसं नित्यादिकर्मणा पितृलोकं, तामसं निषिद्धकर्मणाऽधोलोकं गमयतीति विवेकः । तथा च श्रुतिः —विद्यया देवलोकः कर्मणा पितृलोकः,

अथैनयोः पथोः न कतरेण च न तानीमानि क्षुद्राण्यसकृदावर्तीनि भूतानि भवन्ति जायस्व म्रियस्वेत्येतत्तृतीयस्थानमिति च। लोकान्तरेऽपि परस्वापहारिणं चोरं रज्वा बद्ध्वा राजभटाः प्रतिरथ्यं परिभ्रमयन्तीति प्रसिद्धम्। श्रीरामश्शरणं मम ॥ १५ ॥

सकृदपि यदाप्तवचनं सत्सुखमन्धायि न श्रुतं पुंसा।
तदसौ गृहेषु बलिभिः किङ्करवत्कर्मकारितां नीतः ॥ १६ ॥

एवमाविद्यकं संसारं प्रपञ्च्य इदानीं तन्निवृत्त्युपायस्तत्त्वमस्यादिवाक्यार्थज्ञानमेव न कर्मेति व्यतिरेकमुखेन दर्शयन्नाह—**सकृदिति**। यत् यस्मात्कारणात् पुंसा अधिकृतेन पुरुषेण प्रसिद्धेन च सत्सुखसन्धायि सदेव सोम्येदमग्र आसीदित्युपक्रान्तब्रह्मसुखं प्रतीचा सहाभेदेन सन्धातुं शीलमस्येति तथोक्तम्। अन्यत्र निर्दोषसिद्धसुखावहम्। आप्तवचनं आप्तं निर्दोषं वचनं तत्त्वमस्यादिमहावाक्यरूप आगमः यद्वा आप्तस्य परमानन्दरूपतया परमप्रियतमस्य आत्मनः तदेव वचनम्। तथा च श्रुतिः—'तदेतत्प्रेयः पुत्रात्प्रेयो वित्तात्प्रेयः अन्यस्मात्सर्वस्मादन्तरतरं यदयमात्मा' इति। अथवा आप्तं नित्यप्राप्तं ब्रह्म तस्य विस्मृतकण्ठचामीकरकल्पस्याविद्यातिरोधानानिरसनेन प्रापकं तदेव वचनं 'ब्रह्मैव सन् ब्रह्माप्येति' इति श्रुतेः। अन्यत्र हिताशंसिनो वचनम्। सकृदपि एकदाऽपि। अत्र सकृदित्यनेन मुख्यस्याधिकारिणः सकृन्महावाक्यश्रवणेनापि तत्त्वसाक्षात्कारो भवति। अपिशब्देन च मन्दमध्यमयोः श्रवणाद्यावृत्त्येति दर्शितम्। यथाऽऽह भगवान्भाष्यकारः भवेदावृत्त्यानर्थक्यं तं प्रति यस्तत्त्वमसीति सकृदुक्तमेव ब्रह्मात्मत्वमनुभवितुं शक्नुयात् यस्तु न शक्नोति तं प्रत्युपयुज्यत एवावृत्तिरिति। न श्रुतमाचार्याधीनतया न विचारितं अनेन श्रोतव्य इति श्रुतिविहितविचारावश्यकत्वं सूचितम्। अन्यत्र उपादेयबुद्धया नाकर्णितम्। तत् तस्मात्कारणात् असौ उक्तः पुमान् गृहेषु छत्रिन्यायेन लक्षणया त्रिष्वाश्रमेषु परगृहेषु च बलिभिः पूजाभिः इन्द्रादिदेवताप्रीणनैरुद्देश्यभूतैरिति यावत्। एतेन अचेतनादेवतेति जैमिनिमत-निरासिदेवताऽधिकरणन्यायस्सूचितः। अन्यत्र प्रबलैः पुरुषैः। किङ्करवत् दासवत्। कर्मकारितां अग्निहोत्राद्यनुष्ठानपरतां जलाहरणादिसेवाकारित्वं च नीतः प्रापितः। इत्थं च मुमुक्षोः सन्यास-पूर्वकश्रवणादिसाध्यज्ञान एवाधिकारो न कर्मणि। तस्य मोक्षविपरीतफलत्वादिति दर्शितम्। स्वतो हिताऽहितमजानतः सुखावहं सुहृद्वचनमप्यश्रृण्वतो बलवत्पुरुषपारतन्त्र्येण दास्यमेव पर्यवस्यतीति लोकवृत्तं स्फुटम् ॥ श्रीराम एव गतिः ॥ १६ ॥

सह दयितयेह विषयांश्चरति जनो हन्त जातरूपधरः।
सहदयितया तु विषयांश्चरति न मोक्षाय जातरूपधरः ॥ १७ ॥

स्यादेतत्। मुमुक्षोः श्रवणादावधिकार इत्येतदूरीकुर्मः। तस्य सन्यासपूर्वकत्वं तु दूरीकुर्मः। 'यावज्जीवमग्निहोत्रं जुहोति। यावज्जीवं दर्शपूर्णमासाभ्यां यजेत। कुर्वन्नेवेह कर्माणि जिजीविषेच्छतꣳ समाः' इत्यादिश्रुतिभ्यः कर्मणां यावज्जीवमनुष्ठेयत्वावगमात् सन्यासविधायकश्रुतीनां च अन्धपङ्ग्वादिकर्मानधिकृतपुरुषविषयत्वोपपत्तेः जायावित्तादिसाध्यकर्मसमुच्चितादेव ज्ञानान्मोक्षः। तदुक्तम् — 'उभाभ्यामेव पक्षाभ्यां यथा खे चरतां गतिः। तथैव ज्ञानकर्मभ्यां लभ्यते परमं पदम्'॥ इत्येकदेशिमतं निराकुर्वन्नाह — **सहेति**। इह संसारभूमौ जनः जननमरणादिधर्मः जीवः दयितया धर्मभोगयोरानुकूल्यात् प्रेयस्या सह जातरूपधरः कर्मसाधनवित्तसम्पन्नः भोगोचितस्वर्णालङ्कारशाली च सन् विषयान् विषिण्वन्ति निबध्नन्ति फलासङ्गेन स्वानुष्ठातॄनिति नित्यनैमित्तिककाम्यकर्माणि। कर्मणा पितृलोक इति श्रुत्या नित्यनैमित्तिकयोरपि पितृलोकप्राप्त्यादिबन्धहेतुत्वावगमात्। अन्यत्र स्रक्चन्दनादिविषयान् आचरति अनुभवति च। हन्तेति खेदे। अत्र कर्मठविषयलम्पटयोः समानपदैः प्रतिपादनेनाऽभेदाध्यवसानात् कर्मफलस्य भोगफलनरकाद्यभेदाध्यवसानपर्यवसानात् अतिकुत्सिततत्वं ध्वनितम्। 'न कर्मणा न प्रजया धनेन, प्लवा ह्येते अदृढा यज्ञरूपाः अष्टादशोक्तमवरं येषु कर्म, यथेह कर्मचितो लोकः क्षीयते एवमेवामुत्र पुण्यचितो लोकः क्षीयते' इत्यादिश्रुतेः। 'ते तं भुक्त्वा स्वर्गलोकं विशालं क्षीणे पुण्ये मर्त्यलोकं विशन्ति' इति स्मृतेश्च। कर्मणां मोक्षविपरीतफलत्वावगमात् न मोक्षहेतुत्वम्। न च केवलकर्मणोऽतथात्वेऽपि ज्ञानसमुच्चितस्य तस्य तथात्वं किं न स्यादिति शङ्क्यम्। 'दूरमेते विपरीते विषूची अविद्या या च विद्येति ज्ञाता' इत्यादिश्रुत्या विद्याऽविद्यात्मकज्ञानकर्मणोर्यौगपद्यासम्भवावगमेन जातिवयोऽवस्थाद्यभिमानितदनभिमानिलक्षणविलक्षणाधिकारिकत्वादिना च समुच्चयासम्भवात्। उभाभ्यामित्यादिस्मृतिस्तु जैमिनिरथवेति श्लोके वक्ष्यमाणन्यायेन क्रमसमुच्चयपरत्वेनाप्युपपन्नेति भावः। एवं ज्ञानकर्मसमुच्चयं निराकृत्य सन्यास एव ज्ञानद्वारा मोक्षहेतुरिति दर्शयति—सह दयितया त्विति। तुशब्दः उक्ताद्विशेषं द्योतयति। सहदयितया, दयया सह वर्तमानाः सहदयाः मैत्रीकरुणामुदितोपेक्षाणां सुखदुःखपुण्यापुण्यविषयाणां भावनातश्चित्तप्रसादनमिति पातञ्जलसूत्रोक्तमैत्र्यादिगुणाः सन्त्येषामिति सहदयिनः तेषां भावः सहदयिता सहचरी अनपायिनी दयिता च तया। एकत्र इत्थंभूतलक्षणे, अपरत्र सहार्थे गम्यमाने तृतीया। जातरूपधरः जातमात्रस्य यद्रूपं तस्य धरः नग्नः परमहंस इति यावत्। स्वर्णालंकृतश्च सन्। मोक्षाय तादर्थ्ये चतुर्थी। विषयान् देशान् स्रगादींश्च न चरति न सञ्चरति नानुभवति च। अर्थात् जन एवाऽत्र कर्तृत्वेन

सम्बध्यते। अत्रापि परमहंसस्य ज्ञानसामग्र्यां भोगसामग्र्यभेदाध्यवसानात् अनायासेनैव सकलसुखसाधनसम्पत्त्या पारमहंस्यचर्याया विरक्तसुकरत्वं सूचितम्। एवं च 'ब्रह्मचर्यं समाप्य गृही भवेत् गृहाद्वनी भूत्वा प्रव्रजेद्यदि वा इतरथा ब्रह्मचर्यादेव प्रव्रजेत् गृहाद्वा वनाद्वा, त्यागेनैके अमृतत्वमानशुः, त्यजतैव हि तज्ज्ञेयं त्यक्तुः प्रत्यक्परं पदम्, आरुरुक्षोर्मुनेर्योगं कर्म कारणमुच्यते। योगारूढस्य तस्यैव शमः कारणमुच्यते॥ इत्यादिश्रुतिस्मृतिसहस्रसिद्धः सन्यासो नापलपितुं शक्यः। न चायं कर्मानधिकृतविषयः, अथ पुनरव्रती वा व्रती वा स्नातको वाऽस्नातको वा उत्सन्नाग्निरनग्निको वेति तेषां सन्यासस्य पृथगेव विधानात्। न चान्धपंगुत्वादिकं सन्यासाधिकारिविशेषणमित्यत्र प्रमाणमस्ति। 'यदहरेव विरजेत्तदहरेव प्रव्रजेत् पुत्रैषणायाश्च वित्तैषणायाश्च लोकैषणायाश्च व्युत्थायाथ भिक्षाचर्यं चरन्ति' इति वैराग्यस्यैव तथात्वश्रवणात्। अत एव यावज्जीवकर्माधिकारश्रुतीनां अविरक्तविषयत्वमिति सर्वमनवद्यम्। श्रीराम जयराम जयजय रामाः॥ १७॥

**बहुविषमविषयमिषविषभीषणसंसारपन्नगग्रस्तम्।**
**मीमांसकभेकचमूर्मोचयतु कथं विना हि तत्वविदा॥ १८॥**

ननु मोक्षो नाम निरतिशयानन्दः। स च स्वर्गान्नातिरिच्यते। 'यन्न दुःखेन संभिन्नं न च ग्रस्तमनन्तरम्। अभिलाषोपनीतं च तत्सुखं स्वःपदास्पदम्'॥ इति निरतिशयानन्दस्यैव स्वर्गपदवाच्यत्वश्रुतेः। स च कर्मैकसाध्यः। 'अग्निहोत्रं जुहुयात्स्वर्गकामः। दर्शपूर्णमासाभ्यां स्वर्गकामो यजेत। ज्योतिष्टोमेन स्वर्गकामो यजेत' इत्यादिश्रुतेः। न च तस्य लौकिकवत्कर्मजन्यत्वादनित्यत्वापत्तिः। 'अपाम सोमममृता अभूम। अक्षय्यं ह वै चातुर्मास्ययाजिनः सुकृतं भवति'। इति कर्मफलानामपि नित्यत्वश्रुतेः। न तत्र भवदभिमतज्ञानोपयोगः कर्मज्ञानस्यैव तत्रोपयोगात्। वेदान्तास्तु वेदोपरत्वात् अविवक्षितार्थाः जपोपयोगिनो वा कर्तृस्तावका वेति कर्ममीमांसकजल्पितं निराचष्टे—**बहुविषमेति**। बहुविषमविषयमिषविषभीषणसंसारपन्नगग्रस्ता बहुविषमाः संमोहकत्वात् मृत्युहेतुत्वाच्च अतिनिष्ठुराः ये विषयाः तन्मिषं यद्विषं तेन भीषणो यः संसारलक्षणः पन्नगः सर्पः तेन ग्रस्तं कवलितं जन्तुम्। हीति प्रसिद्धौ। तत्वविदा करतलामलकवत् अपरोक्षीकृतब्रह्मतत्वेन गुरुणा विना। अन्यत्र अहितत्वविदेति छेदः; सर्पमर्मज्ञेन गारुडिकेन विना। मीमांसकभेकचमूः मीमांसकाः कर्ममीमांसकाः त एव भेकाः मण्डूकाः वेदान्तवेदोपरत्वादिनिरर्थकविद्वत्कर्णकटुरटनशीलत्वात् संसाराहिग्रस्तत्वाच्च तेषां चमूः सैन्यं कथं मोचयतु। अर्थात् संसारपन्नगान्मोक्षं

प्रापयतु । सम्भावनायां लोट् । न कथमपि मोचनसम्भावनेत्यर्थः । न ह्यनेकभेकानीकसहस्रमपि एकमपि सर्पग्रस्तं मोचयितुमीष्टे । अयमाशयः— न तावत्कर्मजन्यस्स्वर्गः नित्यः । यत्कृतकं तदनित्यमिति न्यायानुगृहीतया, 'तद्यथेह कर्मचितो लोकः क्षीयत एवमेवाऽमुत्र पुण्यचितो लोकः क्षीयते, अतोऽन्यदार्तं, अन्यराजानः क्षय्यलोका भवन्ति' इत्यादिश्रुत्या विरोधात् । अत एव अपाम सोमममृतादेरर्थवादस्यापेक्षिकनित्यत्वपरतयोपपत्तिः । अत एव च न तस्य मोक्षत्वं, मोक्षस्य सर्ववादिभिर्नित्यत्वाभ्युपगमात् । आत्मरूपत्वे तु तस्य नोक्तदोषः । तस्य च नित्यप्राप्तत्वेऽपि अज्ञानमात्रतिरोधानादप्राप्तकल्पस्य ज्ञानादेव प्राप्तिरिति न तत्र कर्मोपयोगगन्धोऽपि । यत्तु वेदान्तानामविवक्षितार्थत्वमुक्तं तत्किं बाधितार्थकत्वात् विफलार्थकत्वाद्वा । नाद्यः, उपनिषदेक-गम्यस्य प्रत्यगात्मतत्वस्य पराग्विषयप्रत्यक्षादिभिर्बाधायोगात् । न द्वितीयः, स्वप्रकाशपरमा-नन्दैकरसस्यात्मतत्वस्य परमप्रयोजनतया श्रुतिविद्वदनुभवसिद्धत्वेन दुरपह्नवत्वात् । कर्तृस्तावकत्वं तु अकर्त्रात्मबोधित्वात् अतिलङ्घितकर्मप्रकरणत्वात् विभिन्नफलत्वाच्च दूरापास्तमेव । श्रीरामः ॥ १८ ॥

जैमिनिरथवा व्यतनुत शुकताततशुभोक्तिचन्द्रशालायाः ।
निश्श्रेणिमारुरुक्षोर्निपुणं तत्कर्म मनसि बहुकुर्मः ॥ १९ ॥

एवं कर्मणां साक्षान्मोक्षेऽनुपयोगमुक्त्वा, तमेतं वेदानुवचनेन ब्राह्मणा विविदिषन्ति यज्ञेन दानेन तपसाऽनाशकेनेति श्रुतेः संयोगपृथक्त्वन्यायेन काम्यसाधारण्येन नित्यनैमित्ति-कानामेव वा कर्मणां चित्तशुद्धिद्वारा ज्ञानोपयोगमाह — **जैमिनिरिति** । अथवेति सर्वथाऽनुपयोग-पक्षाद्व्यावृत्तिः । जैमिनिः शुकतातशुभोक्तिचन्द्रशालायाः शुकतातः श्रीबादरायणः तस्य शुभा परमपुरुषार्थप्रयोजकत्वादत्यन्तमङ्गलभूता उक्तिः शारीरकसूत्रसन्दर्भलक्षणा वाणी सैव चन्द्रशाला शिरोगृहं तस्याः निश्श्रेणिं प्राप्तिसाधनं अग्निहोत्रादिलक्षणं धर्ममिति यावत् । आरुरुक्षोः अर्थाच्चन्द्रशालामेवारोढुमिच्छोरर्थे व्यतनुत विस्पष्टमतनुत न्यायैरुपपादितवानिति यावत् । अतो निपुणं सर्वप्रतिपक्षप्रतिक्षेपपूर्वकवेदप्रामाण्यप्रतिष्ठापनादिकुशलं तत्कर्म तस्य जैमिनेः कर्मशास्त्र-प्रणयनरूपां क्रियां मनसि बहुकुर्मः बहुमन्यामहे । नित्यादिकर्मानुष्ठानस्यैव चित्तशुद्धिद्वारा श्रवणाद्यधिकारकारणत्वात् । आरुरुक्षोर्मुनेर्योगं कर्म कारणमुच्यत इति स्मरणात् । तदनुष्ठानस्य च जैमिनीयविचाराधीनत्वात् इति भावः । अथवा तत् जैमिन्युपपादितं निपुणं उक्तब्रह्ममीमांसाधि-कारप्रापणक्षमं कर्म अग्निहोत्रादिलक्षणं धर्मं मनसि बहुकुर्मः बहुमन्यामहे न त्ववमन्यामहे । अत्र

च शुकतातेत्यनेन ब्रह्मविदामेकपुण्डरीकस्य श्रीशुकस्यापि ज्ञानदायप्रदः पितेति तदीयवाङ्मात्रस्याति-विश्वसनीयतेति सूचितम्। तत्रापि शुभोक्तीत्यनेन तत्प्रणीतनिखिलस्मृतीतिहासपुराणापेक्षया साक्षा-न्मोक्षसाधननिर्णायकशारीरकसूत्रसन्दर्भस्याऽभ्यर्हिततमत्वं सूचितम्। चन्द्रशालेत्यत्र रूढार्थे कर्मधारयलब्धयौगिकार्थाभेदाध्यवसानात् शिरोगृहस्य चन्द्रपदवाच्यहिमकरकर्पूरतादात्म्यशालिशाला-त्मकत्वप्रतीत्या प्राप्तिमात्रेण सकलसन्तापशमनपूर्वकनिरतिशयानन्दहेतुत्वं ध्वनितम्॥ १९॥

वेदान्तमानराजे विश्रान्ते सुमतिचित्तशुद्धान्ते।
फणिकपिलसरस्वत्योर्बहुधा दौवारिकीपदं सुलभम्॥ २०॥

ननु योगसांख्यशास्त्रयोरपि निपुणतरमात्मतत्वनिरूपणेन मोक्षसाधनत्वात् कथं शारीरक-शास्त्रस्यैवाभ्यर्हिततमत्वं तत्राह—**वेदान्तेति**। वेदान्तमानराजे वेदान्त एव मानानां प्रत्यक्षानुमानोप-मानागमार्थापत्त्यनुपलब्ध्याख्यानां वैदिकसम्मतप्रमाणानां राजा तत्त्वावेदकत्वलक्षणस्वातन्त्र्यात् प्रच्याव्य स्वार्थाविरोधिव्यावहारिकविषयसमर्पणेन तत्पोषकत्वरूपोत्कर्षाश्रयत्वात् तस्मिन् सुमतिचित्तशुद्धान्ते शोभना अबाधितार्थपरिशीलनक्षमा मतिः प्रज्ञा यस्मिन् तादृशं यच्चित्तं तदेव शुद्धान्तः शुभमति-लक्षणनायिकाश्रयत्वादन्तःपुरं तत्र विश्रान्ते निर्विशङ्कं प्रतिष्ठिते सति फणिकपिलसरस्वत्योः फणिनः पतञ्जलेः कपिलस्य च सरस्वत्यौ वाण्यौ योगसांख्यशास्त्ररूपे तयोः। बहुधेति योग्यस्थानसम्भाव-नायाम्। दौवारिकीपदं द्वारपालिकास्थानं सुलभं सुखलभ्यम्; योग्यमिति यावत्। एकस्या रागादिदोषप्रवेशनिरोधियोगवेत्रप्रसारिकात्वात् अन्यस्या देहादितादात्म्याध्यासप्रसरविरोधिविवेकयष्टि-धारिणीत्वात्। आत्मनः चित्स्वरूपत्वनिर्लेपत्वनिर्विकारत्वादिनिवेदनांशेन वेदान्तराजान्तरङ्गत्वाच्च। उक्तं हि—जीवभेदो जगत्सत्यं ईशोऽन्य इति चेत्त्रयम्। त्यज्यते तैस्तदा योगसांख्यवेदान्त-सम्मतिः॥ इति। अत एव जीवभेदाद्यतात्विकार्थस्यापि प्रतिपादकतया निपुणतरत्वाभावान्न तयोः प्राधान्येन मोक्षसाधनत्वमिति भावः। श्रीराम जयजयरामः॥ २०॥

सूत्रं सात्यवतेयश्चक्रे बलमस्य शङ्करो भगवान्।
तत्र निबन्धनमपरे चित्रं भवजालजीवखगमुक्तिः॥ २१॥

ननु शारीरकसूत्रसन्दर्भस्य बहुभिः वृत्तिकृद्भिः बहुधा व्याख्यातत्वात् तेषु कतमदर्शित-पथेन निश्रेयसाधिगम इति सन्दिहानं प्रत्याह—**सूत्रमिति**। सत्यवत्याः अपत्यं सात्यवतेयः श्रीबाद-रायणः सूत्रं बह्वर्थसूचकं अथातो ब्रह्मजिज्ञासेत्याद्यनावृत्तिःशब्दादित्यन्तब्रह्मसूत्रसन्दर्भं तन्तुं च चक्रे

त्याग नवनीतचोर देव वेणुगान तुङ्ग
राग गानलोल! रमावल्लभ! मज ॥ ३ ॥

सू—एणेरीति कवि प्रत्याहारसूत लीलादरु समर्पिल्यानंतर कवि सागरोपमवीरायित लीला समर्पिली ते कैसी ॥

मध्यमावति रागम्] ॥ सागरोपमवीरायित लीला ॥ [आदितालम्

चित्त पहा-सतिपतीचे-
चित्त पहा शितिगळ मोह ।
पालेचि उपरति-भामली जलधिरीति ॥ ॥ ध्रु ॥

निरापण आगत नीलपयोभृत-
साराशे विहरतात केश भ्रूयुगळ ।
चारुधनुष्कोटिप्रदेश लोचनश्रि ॥
गार मीन शाब शंकाश मंगळगळ ।
सारदर प्रकाश झाले शशिफाले ऐसे ॥ १ ॥

सरस भूषणरत्नसागर जनित रत्न-
शरधि मुक्त धर्म बिन्दुसार मलयजलेप ।
सुरुचिर बाल डिंडिर उन्नत कुच ॥
वर शोभति धरणीधर सललित भुज ।
कर विद्रुमलतसार घनवळीभङ्ग अपार ॥ २ ॥

आवर्तनाभिकूप अतुलितजघनद्वीप
भावधरकूजितघोष मञ्जुळरो-
मावळी पन्नगभूष ऊरुकदळीं
लावण्य गम्भीर निर्दोष त्यागेश सती
केवळ परस्पराश शैवाली निस्सङ्ग भूषा ॥ ३ ॥

सू—एणेरीति कवि सागरोपमवीरायित लीला समर्पिल्यानन्तर कवि वर्षोपमान उपरिसुरत लील समर्पिली ते कैसी ॥

भैरवी रागम्] ॥ वर्षोपमान उपरिसुतलीला ॥ [अट ताळन्

उडुराजबिंबास्य उपरिसुरत वर्षायोग समान भासला ॥ ॥ ध्रु ॥

घडिघडि रोमावळी कालसूचक पिप्पिली-
काळि निघाळि नाभिमूळि पहा आली ॥
सरस धम्मिल्लानिल-सजला मेघ झाला
चिरधुता सुमा माला-चित्र विकीर्ण बिन्दु झाले
उरुतर स्वेदजल प्रवाह दर मणित नाद
चारु कटाक्ष वरवरा चपला भेद करिति मोद ॥ १ ॥

नवरत्न सुतिलक चवी भ्रू इन्दुकार्मुक
नवभूषाच्युत माणिक्य नगवैरिगोपास्तोक
सुवज्राधर बकपंक्ति भव मुक्ताहार
श्वासोश्वास पवनशीतळ वरधाव उपचार ॥ २ ॥

घन मेखल शिञ्चित कमनीय भीकरुत-
मनोज्ञा कटि भ्रूहित महर्षा त्याग हित ।
मन उल्हास बीज प्रेरिले त्यास ॥
जनित मोहांकुरास आशा सेत वृद्धि-
मनसिजकेलि फळराज खकलेसज ॥ ३ ॥

सू — एणेरीति कवि वर्षोपमान उपरिसुरत-लीला समर्पिल्यानंतर उपराग साम्य उपरिसुरतलीला समर्पिली ते कैसी ॥

घण्टारव राग] ॥ उपरागसाम्य उपरिसुरत लीला ॥ [झंप ताळ

उपरिसुरत उपराग पहा
तपनीय चेल चाप तरुणीमणीचा ॥ ॥ ध्रु ॥

घन धम्मिल्ल राहु कमनीय वदनेन्दु
अनघ त्या समई व्यापून असतां ।
घन वन्द्य शरीरश्रम जलनदीचे स्नान करून
मनसिजे आराधन करून मन्त्रजप केला ॥ १ ॥

कनककलश कुचे करि देउन धर
जनित सुधाद्विज दान दिल्हे
मन उल्हासेकून ममत उपजायास
मनोहर चुम्बन दान आलिङ्गन दिल्हे ॥ २ ॥

अमल कटि भूदान अनङ्ग सदन दान
कमनीय नगकन्यादान करून
विमळमण्डल पाहून विप्रत्याग त्यागवस्त्रे
कमलापुरीचास कामवस्त्रदान दिल्हे ॥ ३ ॥

सू—एणेंरीति कवि उपरागसाम्य उपरिसुरतलीला समर्पिल्यानंतर कवि संवत्सरादिसाम्य उपरिसुरत लीला समर्पिली ते कैसी ॥

राग ?] ॥ संवत्सरादिसाम्य उपरिसुरतलीला ॥ [ताळ ?

वीरायित युगादि समा सारखें घन फल झाले ।
मारराजास निखिल मंगळविजय झाले ॥ ॥ ध्रु ॥

सतत कुन्तळदेशासे च्युतसुमफल-
सारतर मध्यदेशासे सखी अतुळ वस्त्रहीनफळ ।
अमल चोळदेशासे वितत सुगन्धवस्तु फळ-
कांचीदेशासे प्रति रहित चञ्चळ फळ असे बाळ ॥ १ ॥

दोनकंदाय हस्तासे बरे अहेत
तीन कंदाय चित्रासे वरे तीनकन्दाय पूज्य
दिव्य आश्लेषासे दोनकन्दाय श्रवणासे बरे अहेत
तीनकंदाय आद्रासे असे बाळ
आदाय सम्पूर्ण कन्यासे-राजफल ॥ २ ॥

आदाय वक्षोज कुम्भासे-रत्न
पाद कटक आदाय भासुर कर्काटाकासे
आदाय लोचन मीनासे समान व्रय
आदाय त्याग मिथुनासे असे बाळ ॥ ३ ॥

सू — एणेंरीति संवत्सरादि साम्य उपरिसुरत लीला समर्पिल्यानंतर कवि पदैकदेशाक्षरान्यार्थ लीला समर्पिलातो दरु परमेश्वर वादजयार्थ प्रकटकरितो पहा ॥

केदारगौळ राग ] [ आदि ताळ

सहेनास काय सखी-सरस इन्दु मुखी ।
विहगवाहनवाक्य दुःखी विनती ऐकून हा सखी ॥ ॥ ध्रु ॥

सरसकुचयुगदेशी धरणीसे धरितीसी ।
वरमुखप्रदेशी वनिने-गगन धरितीसी ॥
निरुपमकुचप्रदेशी-नीरजहित धरितीसी ।
करकमलप्रदेशी कञ्जभव धरितीसी ॥ १ ॥

अतुल कन्धरप्रदेशी अभिनवजल धरितीसी ।
सततनाभिप्रदेशी स्त्रजणि भय धरितीसी ॥
अति मृदुनासप्रदेशी आदिपुरुषास धरितीसी ।
वितत मनासप्रदेशी विमललक्ष्मीस धरितीसी ॥ २ ॥

चारु कटिप्रदेशी सर्वदा शिर पाहतीसी ।
सरस कपोळप्रदेशी मारुता धरितीसी ॥
धीर भवनप्रदेशी त्यागराजाला धरितीसि ।
वीर त्यागमदनगोपाल! विनयवती असे ॥ ३ ॥

सू — एणेंरीति कवि पदैकदेशाक्षरान्यार्थ लीला समर्पिल्यानंतर कवि सकलजन भ्रान्तिनिवारण लीला समर्पिली ते कैसी ॥

मध्यमावति राग ] ॥ सकलजन भ्रांतिनिवारणलीला ॥ [ अटताळ

व्यर्थ कां भ्रमतारे जन हो ।
सार्थ कां पाहतां-समर्थ दरिद्राचे एक ॥ ॥ ध्रु ॥

धान्यकोटि असणारास धान्य अल्प असणारास ।
धान्य क्षुधा समई धरणीवरि प्रस्थमात्रे तृप्ति ॥ १ ॥

चतुरङ्गबल असणारास चतुरङ्गबळ नसणारास ।

चतुरङ्गबळा ते चालतां चतुरङ्गबळ दर्शन समा ॥ २ ॥

दहाकोटिस्त्रीया असणारास धर्मपत्नी येक असणारास ।
दहाकोटि मध्यें सुरत तरुणी येकीनें तृप्ति ॥ ३ ॥

धनाढ्यहीं येकच दरिद्रिहिं येकच ।
मनाचा विकार गेल्यां महादेव त्यागेश ब्रह्म मीच ॥ ४ ॥

सू — एणेंरीति कवि सकलजन भ्रान्तिनिवारण लीला समर्पिल्यानंतर कवि परतत्वबोध परमाणुकृत पद्मजाण्डलीला समर्पिली ते कैसी ॥

केदार राग ] [ आदि ताळ

परंजोति सुख पावा पावा जगती जन हो
परमानन्द अनुभव सरसिजसंभवाण्ड किति झाले त्यामध्ये ॥ ॥ ध्रु ॥

निरुपम लोकनिकर किति झाले त्यामध्यें ।
सुरविभव साम्राज्य किति पुरे हे मति ॥ १ ॥

सुरसङ्ग मध्यें पहा सुरुचिर दिक्पाल किति ।
शरनिधि त्यादिगंतांत किति झाले त्यामध्यें ॥
सरस द्वीपनग किति झाले त्या मध्यें ।
नरपालचक्रवर्ति किति पुरे हे मति ॥ २ ॥

धरणीवरि खण्ड किति धनधान्यभूषण किति ।
करितुरगजन भेद किति झाले त्या मध्यें ॥
परदेशभाषाभेद किति झाले त्यामध्यें ।
हर त्यागेशाचे स्तोत्रगति पुरे हे मति ॥ ३ ॥

सू — एणेंरीति कवि परतत्वबोध परमाणुकृत पद्मजाण्डलीला समर्पिल्यानंतर कवि सर्वान्तर्यामि सर्वमय लीला समर्पिली ते कैसी ॥

पन्तुवराळि राग ] [आदि ताळ

यांत तूं कोणतानऱ्हेस-हे न कळे आह्मास ॥ ॥ ध्रु ॥

तूंच पञ्चमहाभूतें तूंच शरीर जीव ।
तूंच सूर्यचन्द्रइन्द्र तूंच ब्रह्मदेव ॥ १ ॥

तूंच मुनिऋषिगन्धर्व-तूंच भूमि आकाश नद्या ।
तूंच समुद्ररत्नजलजन्तु तूंच पशुमृगवृक्ष ॥ २ ॥

तूंच प्रपञ्चमायबापगुरु-तूंच चराचरब्रह्म ।
तूंच वेदशास्त्रपुराण-तूंच मायामोह तत्वनिधि ॥ ३ ॥

तूंच धनधान्यवस्त्र-तूंच भूपकोपन दयादर्म ।
तूंच जयकीर्ति बुद्धि तूंच कार्यकारणकर्ता ॥ ४ ॥

तूंच देव अर्चकभक्ति-तूंच सामग्रि मन्त्र ध्यान ।
तूंच त्यांचे फलसमग्र तूं तो मीच त्यागेश शिवोहम् ॥ ५ ॥

सू—एणेंरीति सर्वान्तर्यामि सर्वमयलीला समर्पिल्या नंतर कवि पदैकदेशापसव्य लीला समर्पिली ते कैसी ॥

पन्तुवराळि रागम् ] [आदि ताळम्

विष्णुपूजितपाद विपरीत पहा ।
हरि विष्णुप्रिय त्यागराजचित्तज मर्दन! ॥ ध्रु ॥

कालाक्षराजपीडित प्राणिनिकर ।
हिमलोल झाले भावसांगा कालसंहर ॥ १ ॥

हेमाद्रिचाप धर हीनमानवकम्प ।
प्रेम मानस झाले व्योमकेश ॥ २ ॥

देव तामसबुद्धि देहिं सञ्चय ।
शिव सेवारत झाले त्यांचा भाव सांगा ॥ ३ ॥

कुमुदासशेखर दामरहित रमा ।
विमुख झाले जन विश्वनाथ ॥ ४ ॥

दोषहर करून दूर होउन जनि ।
दोषकर झाले त्याग धूर्जटि शिव ॥ ५ ॥

सू — एणेंरीति पदैकदेशापसव्य लीला समर्पिल्यानंतर कवि जनमोह जनित निर्वेद लीला समर्पिली ते कैसी ॥

अठाणा रागम् १] [अट ताळम्

कधी करितील जाण-परतत्वचिन्ता ॥ ॥ ध्रु ॥

बाले अज्ञान कौमारे क्रीडन-
बाल संग तरुणपण परतत्वचिन्ता ॥ १ ॥

अंगगळित फलित वृद्धपण-
अणिक रोग भजा न ते परतत्वचिन्ता ॥ २ ॥

अतित्वरित त्यांची आयुष्याची गति-
अहर्निशि ऋतुसंवत्सर झाली परतत्वचिन्ता ॥ ३ ॥

यागनेम विसरतात ईषणत्रय भ्रमतात-
त्याग त्रिभुवननाथ हे परतत्वचिन्ता ॥ ४ ॥ ॥ कधी ॥

(स्वरम्)

री रि री म्म ग री-मग गा री-
पमगरि-मगरिसा रिरिसा मगारिसा ॥ १ ॥

री म पा म्म पध ध प-पम गरि री-
पमगरि-मगरिसा-रिरिसा-मगारिसा ॥ २ ॥

दाध पम्मप दाध पमगरि-रीम पम्मप-
पाम मा ग रि री-पमगरि-सगरिसा-रिरिसा-मगारिसा ॥ ३ ॥

सारिं रि स-रीम्म मग-रीप्पम प द ध प-
निस्स सा-नि रि रि स-नि स नि रि रि स रि-सनिससा ॥ ४ ॥

स्वरजति—

त क्कि ड त डिं डिं - गि णां गत्तों - दिं धिं न्नां ग तौं ।
स स स सा सा - नि नी दा पा द धा ध मा गा री ।

त क्कि ड त क दीं धीं-दि क्कि ड त क-त क झ नु तां ।
स स स पा पा-प म ग-गा री स्सा । धळांगुतोम् ॥ म गा रि सा ॥

॥ नरगजजति ॥

क्किड तक झेंत झें तरि - ता क्किड त क दिं धीं ।
ध ण त त - धग धग तों - धळांगुतोम् ॥ १ ॥

झें त रि त डिं - डिं कु त क्कि ड त क - धणततों - घिकिततों ।
ज ग ज ग त क त क धीं - धीं - त क्कि ड त क त क घि त्ता - धळांगुतो ॥

सू — एणें रीति जनमोह जनित निर्वेदलीलासमर्पिल्यानंतर कवि सव्यापसव्यभाषाद्वय दरुद्वय ताळद्वय लीला समर्पिली ते कैसी ॥

अठाणा रागम् ] [ आदि ताळम्

सरस बोलून कधीं सल्लापकरि
वाद करूं नको ॥ १ ॥

कनकदेवर मातारजन हित दुखानाश
आतां शिवाला लाज काय ॥ २ ॥

तन धन मान वय जनि
त्यागामितकर उगारति ॥ ३ ॥ ॥ सरसबोलून ॥

आहिरि रागम्] ॥ तेलुगुपद (भाषाद्वयम्) ॥ [ आदि ताळम्

कनरुकदा वारि कवल सति
कनलु वो सरस ! ॥ १ ॥

कां जळाव शीत असेना
कां दुरित हित जारत मरवदे कनक ! ॥ २ ॥

तिरगापूर कां तामिगा त्याग
निजयौवन मान धनता ॥ ३ ॥

सू — एणेरीति सव्यापसव्य भाषाद्वय दरुद्वय ताळद्वय लीला समर्पिल्यानंतर कवि जनोपकार आत्मसंरक्षण शिवनामकवचमहत्व लीला समर्पिली ते कैसी ॥

पन्तुवराळि रागम् ]　　[ अट ताळम्

सतत शिवनामकवच मज रक्षितें-
सर्वदा सर्वत्रास ।
वितत भय मज कोणाच काय-
विश्वेश सदा हृदईं आहे ॥　　॥ ध्रु ॥

( या सहावे अंकाचा सेवटीं हे दरूचे पूर्णस्वरूप आहेत )

सू — एणेरीति कवि शिवनामकवच दरु समर्पिल्यानंतर हे दरु समर्पिली ते कैसी ॥

पन्तुवराळि रागम् ]　　[ आदिताळम्

ललना तुज योग्य ललित त्यागेश ।
कलिकलुष हर कमलालयवास ॥　　॥ ध्रु ॥

सरस मुखें मध्यें वर कान्तीनें ।
हरिसे हरिसे हरिसे जिंकिले ॥ १ ॥

गळे चारुकरे घनस्तनयुगळे ।
जलजास जलजास जलजास जिंकिले ॥ २ ॥

मण्डितनयने मन्दगति वेणीनें ।
अण्डजास अण्डजास अण्डजास जिंकिले ॥ ३ ॥

सू — एणेरीति लोकभिन्नरुचिन्याय लीला समर्पिली ते कैसी ॥

बेगडा राग ]　　[ अटताळम्

चित्र पहा चरित्र या मोहाचे ।
करणि धरणीवरि यांचे ॥　　॥ ध्रु ॥

माय बाप सुत वाडतो ह्मणतोद्यम ।

माझे दिन भरितो ह्मणतो ॥ १ ॥

धनिक धनावृद्धीने सन्तोषतो ।
दैव परकीय ह्मन हांसतो ॥ २ ॥

शरीर पोषणेनें सन्तोषतो त्याग ।
धरणी तनु माझे ह्मणतो ॥ ३ ॥

सू — एणेरीति कविलोकभिन्नरुचि न्यायलीला समर्पिल्यानन्तर सल्लांदरु समर्पिली ते कैसी ॥

कल्याणि रागम् ] ॥ सल्लामुदरु ॥ [ आदि ताळम्

धीं ध धि भिम-त द्धि भिम-
धि-तां धि-तां कि ड त क-
तां दि द्दि-तां त्क झे नु-
तझ्झें झेंतरि धळांगुतोम् ॥

तां धि तां धि त क धणंत-
कि ड त क झे नु-
तध्धों गद्धक तोंग-
त क झे नु ता - त क धळांगुतोम् ॥

[1] अम्बानिलय चिदम्बर विलसित-
लम्बोदर हेरम्ब सल्लामु ।
अम्बर मणिरुचि डम्बविडम्बन-
अम्बुज हित [2]चिदम्बर सल्लामु ॥ १ ॥

त झ्झे नु तां त क झे नु तां-
तं धि मि धि मि त झ्झे नु,
झे नु त क से नु तां ।
त कि ड त धी नु त क-

---

1 अम्बा तनय 2 शिदम्बर ।

ता ह त त द्धि मि तथ्थों थों गु,
त क ध ळां गु त क घि-ता ॥

सुरटि रागम् ] [ अट्टताळम्

ता धि धि मि त ता ह त त झे नु-
धीं द्रु त ह त धळागुतोम् ॥

तां घि-त क त क घि-त क त क-
ध ळां गु त क त क घि-तां ।

धिं धि मि घि मि ता ह त त झे नु-
ध ळां गु त क त क झे नु ताम् ॥

सति निर्मल सति चक्राङ्का
गति सद्गुणवति सल्लाम्रु ।
नति त्रिजगद्गति रूपा
श्रुति सरस्वति सल्लाम्रु ॥ २ ॥

त क्कि ट त क । त क धि मि कि ट त क-
धि क्कि ट त क धि मि धि मि कि ट झे नु-
त कि णां गु त क घि कि णां गु-
ध ळां गु त क त धिंगिणतोम् ॥

असावेरि रागम् ] [ छापु ताळम्

तं द्धि मि धि मि त झे नु झे नु । तां द्धि-ता ह-त-
धि द्धि मि धि मि त क घि त-क । धिं द्रु-त क तोम् ।
ता ता धि-ता धि । ता धि ता धि-
त द्धि कि ट त क धि मि कि ट । ध ळां गु त क घि-ता ॥

नन्दनन्दन इन्दुवदन
कुन्दरदन गोविन्द सल्लाम्रु ।
मन्दहासन मन्दजोद्धरण
नन्दितगोपालबृन्द सल्लाम्रु ॥ ३ ॥

त क धि मि धि मि । त क झे नु झे नु-
ता ह त त द्धि कि ट त क-
त कि णां गु । त क कि णां गु-
त क ध णे कु त क धि-ता ॥

रेवगुप्ति रागम्] [आदितालम्

तं द्धि मि त द्धि-ता ह त त क झे नु-
तां धि मि त त क ध णं त कि ट त रि-
धिं धि मि त क धि । ता ह त कि ड त क झे नु-
त क त धी नु त क । धळांगुतोम् ॥
त झें त क झें । कि ड त क झें न क झे क-
ता धि-त क धि । त क झे नु ताम् ॥

वासवहित कमलासन कृतभृगु-
पासन सद्गुण भासुरे सल्लाप्रु ।
भोंसलदैवते श्रीशाहनुते महि-
षासुरमर्दिनी दासपाले सल्लाप्रु ॥ ४ ॥

त कि ट तों । त रि कि ट तों
त क तों धि क तों कि ट त क-
त कि ट त क धी नु त क । ता ह त त धि मि-
त तों तों गु त क । ध ळां गु त क धि-ता ॥

पन्तुवराळि रागम्] [छापु ताळम्

त ह् ण त त क झे नु त । तां दि त कि ड त क ।
झें ता रि-तकणं गि । तं धि मि धि मि त क तोम् ॥
ता ता धि ता धी । ता धि ता धी ।
त ह् ळा गु त क ध ळां गु । त क ध णे कु त क धि-ता ॥

# From Our Visitors' Book

We, the present generation, should certainly be proud of having such a great and wonderful library which should be used much better by us.

K. VISWANATHAN,
*Programme Executive, A. I. R.,*
*Pondicherry.*

31—3—1970

It was on my way back from Tiruchirapally to Pondicherry that I passed by Tanjore fort of Marathas. Here lies the great ocean of knowledge collected by Serfoji, the ruler of this area. I stood on the shores of this vast ocean concentrated in the form of handwritten manuscripts; waves after waves of inspirations came and collided with the shores of my heart and brain, though I could not bathe to fill it certainly wetted my intuition. I wish this ocean waved though ages, Layers of time did not cover the contributions of its workers, those who maintained it, preserved the great heritage of our nation.

N. R. TANDON,
*An Author, Play-wright of Hindi,*
*Now Assistant Station Director,*
*Pondicherry.*

31—3—1970

புண்ணியமான பாரத தேசத்துக்கு திலகம் போல் விளங்கும் தஞ்சாவூரில் பரம தர்மிஷ்டர்களாய், ராஜ்யபரணம் செய்து வந்த மகாராஜாக்களில் பிரதானமாயுள்ள சரபோஜி மகாராஜாவினால் பரம சிரத்தையுடன் ஸ்தாபனம் செய்து அபிவிருத்தி அடைந்து வரும் ஸ்ரீ சரஸ்வதி மகாலை 4—4—70 அன்று போய்ப் பார்த்தேன். அனாதியான வைதீக மதத்துக்கு ப்ரமாணமாயுள்ள வேத சாஸ்திரங்களுடைய முடிவில்லாத மஹிமையை நேரில் பார்ப்பது போலும், நம் முன்னோர்களுள் பெரியோர்களுடைய கௌசலமான புத்தி சக்தியையும் பார்த்து பரமானந்தமடைந்தேன். மேற்படி ஸ்தாபனத்தை நம் ராஜாங்க ஆதரவால் உயர்ந்த மகா வித்வான்கள், அந்தரங்க அபிமானத்துடன் நிர்வாகம் செய்து வருவது மிகவும் கொண்டாடத் தக்கது. ஸ்ரீ பகவத் கிருபையால் மேற்படி சரஸ்வதி மகால் ஆசந்திர தாரகம் மேல் மேல் அபிவிருத்தி அடைந்து நமது ஸனாதன தர்மத்தை ரக்ஷிக்க வேணும்.

சேங்காலிபுரம், ஸு. நாராயண தீக்ஷிதர்,
வடகுடி அஞ்சல், நன்னிலம்.

4—4—70

It was a great pleasure to find in such a beautiful library nice people to help me and show treasure of Indian civilization.

A. MALLET, *France.*

It is really a great pleasure, which enriches the knowledge of a person by visiting this library. I was very much impressed by the explanations and talk of Mr. Seeralan,

the Assistant Librarian, who has got very good knowledge of all collections. It's our great treasure-house of old manuscripts, which should be always maintained and preserved. The suggestion I would like to give is that some sign boards in English as well as in Tamil should be put on the way outside the gate to guide the persons in a proper way so that they could approach the library and museum without wasting their time. I wish all the success to this library.

GUSAIN RAM,
*Government of India Tourist Office,*
*35, Mount Road, Madras.*

17—4—70

நானும் எனது நண்பர்களும் இன்று இந்த கலைக்கூடத்தைப் பார்வையிடும் வாய்ப்பு கிடைத்தமைக்கு எங்களது மகிழ்ச்சியைத் தெரிவித்துக்கொண்டு இத்துடன் தொடர்பு கொண்டுள்ள அதிகாரிகளுக்கும், மற்றும் உள்ள ஊழியர்களுக்கும் எங்களது பாராட்டுகளைத்தெரிவித்துக் கொள்ளுகிறோம்.

கு. சுந்தரராசப் பெருமாள்
முதல்வரின் நேர்முக உதவியாளர்,
தமிழ் நாடு.

2—5—70

It is a monumental collection. I wish I could go through even a fraction of the thousands of manuscripts here. What I have seen is fantastic.

I. CHATTARJI,
*Commandar I. N. Director N. C. C.*
*(T N. & D)*

8—6—1970

People working in this place are really kind. Vibrations, as they say now in Europe, are good in this place and in the short time I passed here I could enjoy to look at these pages full of time. I did enjoy to see these paintings, that are very near the feelings of modern painting.

Thanks for everything.

FRANCISCO TOSE BLANCO,
*South America.*

This library is well maintained. The newcomers are able to understand the deep interest of Serfoji Maharaja in literature, by the staff explaining everything nicely.

S. G. DHARMA,
*Deputy Secretary to the Govt. of Tamilnad,*
*Home (Police) Dept. & Chief Inspector of*
*Approved Schools & Vigilance Service (in-charge)*

18—5—70

Visited: Mr. Sorenson and Miss Hedstron from U. S. A. 21—5—70.

Thanking the Librarian for an impressive 'guided tour' through a part of medeival India that was unshown to us so far.

BRUNO ALBERT,
*West Germany.*

28—5—70

It is a rare treasure-house of India's cultural wealth, well-conceived, well-preserved and well-arranged. The Librarian in charge gave us a ready help and guidance for which we are extremely grateful.

S. C. GUPTA,
*Divisional Operating Superintendent,*
*Western Railway, Bombay.*
(visited with family)

29—5—70

A visit to this Library (this is much more than a library) is a memorable event. All interested institutions should come forward to spend lakhs of rupees to preserve the valuable heritage.

S SOUNDARAJAN,
*Financial Adviser, Govt of Gujarat.*

1—6—1970

A visit which has given me the idea about the love of Rajahs about literature and how they link labour behind all these. The first time I saw the best collection of printed books in all the languages. Thanks.

1—6—1970

Pratap. R. GHATGA.

I spent a very educative hour going round the Library. The wealth of knowledge cannot be fathomed in such a short period of time I look forward to visiting this library once again.

R. S. NARONHA,
*Army Head Quarters, New Delhi.*

13—6—1970

It is a memorable experience to visit this priceless treasure-house of learning and art and to know that it is looked after with so much care and love. One would wish that government and philanthropic minded citizens would provide it with all the facilities necessary to protect it against the climate etc., and render it safe for posterity.

RADHA BURNIER,
*Director, Adyar Library & Research Centre,*
*Madras.*

14—6—1970

Especially I enjoyed the horse and elephant books and am amazed at the trueness and vibrancy of the colours on the palm-leaf manuscripts after all these centuries. The small books are so personal. The pictorial Ramayana story stands out particularly. The large views photographs of temples sites etc. are very fine. This is a wealth of interest I have barely tapped.

ELLEN CILMORE,
*Boston, U. S. A.*

15-6—1970

I spent an educative hour going through these rare manuscripts and valuable books. This library is a unique one in the sense it has such a valuable collection of such old

manuscripts. Scholars and research workers will find it very valuable. Hope authorities concerned will look after it well lest such precious copies are destroyed.

USHA R. BHATTACHARYA,
16—6—1970 *103, Rash Behary Avenue, Calcutta-29.*

A visit to this library was a very educative experience. The valuable collections as well as the research made are commendable. The Library deserves every encouragement.

N. D. SAKHWALKAR,
*Commissioner of Income Tax,*
18—6—1970 *Madras (Central) Madras.*

My wife and I are grateful to Mr. Gopala Iyengar for taking us round the library and explaining to us the nature of the works maintained and published. I am particularly impressed with the old manuscripts in different languages. It is very interesting to note that books in one language are written in different languages. This helps us, if we pursue it that we can evolve one common script for all our languages.

K. SUBBARAO,
*Retired Chief Justice of Federal Court,*
19—6—1970 *Delhi.*

Never seen before, this rarest library. It is not only a show; it is the knowledge of the old and ancient literature.

KAKADE SURESH VINAYAK,
30—6—70 *2047, Sadashiv Peth, Poona-30.*

I take great pleasure after seeing this, such an extra-ordinary library. The record is kept very well.

KALLADE NARESH VINAYAK,
30—6—70 *2047, Sadashiv Peth, Poona-30.*

This has been an extremely rewarding visit. It is a pity that such a treasure house is not being properly attended to, preserved and developed by the Governments, both State and Central. I wish the Library will become known to our intelligentia and those who cherish our heritage will be interested enough to do something to help this library.

SADHAN MUKHERJEE,
4—7—1970 *Special Correspondent, New Age, New Delhi.*

Visited—Win Ross Sanctuary, Trichy R. D. Coimbatore 10—7—1970.

I visited the Sarasvati Mahal Library to-day and had seen with great delight and awe the rare manuscripts and the other books collected by three generations of Thanjavur rulers and very carefully preserved. A few minutes' spending has not quenched my thirst and even my whole life, I consider is not sufficient to go through and understand, and not to speak of assimilation of their contents. Truly knowledge is an ocean and boundless,

The Library is well maintained and Government should still pay better attention by way of making sizeable allotments to preserve it, get them translated and distribute their nector to all the masses.

... ... ... ...

12—7—1970 *Presidency Postmaster, Madras-1.*

I find my visit to this library very useful to make me live yester-years

N. BALASUBRAMANIAN,
(*Port-Trust*) *Madras-53.*

The visit to this library will ever remain unforgettable. It is really interesting to see different items in this library and one gets before his eyes the contemporary culture in this part of the country.

V. D. NAIK,
21—7—70 *Madras-10.*

The visit to this library with my friends Mr. Akbar Batch and Mr. Shahabuddin is really a pleasure for me. The Collections are highly valuable and worth seeing. I have been much impressed by going through almost all sections of this library. This contains a history of religion, culture and fine Art. I will like to suggest to translate some of the valuable books in English so that people in foreign country may know about our ancient culture.

SYED SALIM CHISHBI,
26—7—70 *Advocate, Ajmer.*

A rich and rare collection.

N. R. BHARGAVA (G. M., B. E., M. L.,)
25—7—70 *Bangalore.*

Two copies of each book have to be sent for review in the Journal. Articles published in this Journal can be reproduced with the permission of the Editor. All communications regarding the Journal may be addressed to :—

THE EDITOR,
The Journal of the T. M. S. S. M. Library.
THANJAVUR,
Tamil Nadu. ( India )

## IN THE PRESS

1. **Ananda Raghavam**
   —by Rajachudamani Dikshita ( Sanskrit Drama )
   Edited by Thiru P. M. Padmanabha Sarma.

2. **Purvaparasaryam** (Astrology)
   Text in Sanskrit and Tamil Translation by Thiru P. P. Lakshminarayana Upadhyaya.

3. **Sruta Pradipika** by Sudarsana Bhatta (Sanskrit)
   — Prof. A. Srinivasaraghavan, M. A.

## WILL BE SHORTLY READY

1. சிவகாமசுந்தரீ பரிணயம் தெலுங்கிலும் தமிழிலும் மூலம், தமிழ் மொழிபெயர்ப்பு, ஸ்வர ஸாஹித்யம் இவற்றுடன்.
   Edited by Dr. S. Sita, M. A , Ph. D.

2. வராக ஓரா சாத்திரம் (சோதிடம்)
   இலிங்கன் இயற்றியது (உரையுடன்)
   —திரு. அடிகளாசிரியர்.